# MAHISA SATAKAM, PADARA VINDA SATAKAM, STUTI SATAKAM, MANDASMITA SATAKAM, KATAKSMI SATAKAM.

---

EDITED

BY

PANDIT JIBANANDA VIDYASAGARA B. A.

---

**CALCUTTA:**

PRINTED AT [illegible] SATYA PRESS

**1874.**

*To be had from Pandit Jibananda Vidyasagara B. A. Superintendent, Free Sanskrit College of Calcutta.*

पण्डितकुलतिलक-पूज्यपाद श्रीमत् तर्कवाचस्पति
पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि

| | | |
|---|---|---|
| १ | आशुबोध व्याकरणम् ... | ३। |
| २ | धातुरूपादर्शः ... | २ |
| ३ | शब्दस्तोम-महानिधि [संस्कृत अभिधान] | १० |
| ४ | सिद्धान्तकौमुदी—सरलाटीकासहिता ... | १ |
| ५ | सिद्धान्तबिन्दुसार [वेदान्त] ... | ॥ |
| ६ | तुलादानादिपद्धति [वङ्गाक्षरैः] ... | ४ |
| ७ | गयाश्राद्धादिपद्धति ... | १ |
| ८ | शब्दार्थ रत्न ... | ॥। |
| ९ | वाक्यमञ्जरी [वङ्गाक्षरैः] .. | । |
| १० | छन्दोमञ्जरी तथा वृत्तरत्नाकर—सटीक | ॥= |
| ११ | वेणीसंहार नाटक—सटीक .. | १ |
| १२ | मुद्राराक्षस नाटक—सटीक .. | १॥ |
| १३ | रत्नावली .. | ॥। |
| १४ | मालविकाग्निमित्र—सटीक ... | १॥ |
| १५ | धनञ्जय विजय—सटीक .. | । |
| १६ | महावीरचरित ... | १॥ |
| १७ | साङ्ख्यतत्त्वकौमुदी—सटीक ... | २ |
| १८ | वैयाकरणभूषणसार ... | ॥। |
| १९ | लीलावती ... | ॥। |
| २० | वीजगणित ... | १ |
| २१ | शिशुपालवध—सटीक ... | ६ |
| २२ | किरातार्जुनीय—सटीक ... | २॥ |
| २३ | कुमारसम्भव—पूर्वखण्ड सटीक ... | १ |
| २४ | कुमारसम्भव—उत्तरखण्ड ... | ॥ |
| २५ | अष्टकम् पाणिनीयम् ... | ॥। |
| २६ | वाचस्पत्यम् [संस्कृत वृहदभिधान] ... | ६० |
| २७ | कादम्बरी—सटीक ... | ४ |
| २८ | राजप्रशस्ति ... | = |
| २९ | अनुमानचिन्तामणि तथा अनुमानदीधिति | ४ |

# शतकावलिः ।

॥ हरिः ओं ॥ स्तुतिशतकं ॥ ओं ॥

॥ १ ॥

पाण्डित्यं परमेश्वरि स्तुतिविधौ नैवाश्रयन्ते गिरां
वैरिञ्च्यान्यपि गुम्भनानि विगलत् गर्वाणि शर्वाणि ते ।
स्तोतुं त्वां परिफुल्लनीलनलिनश्यामाक्षि कामाक्षि मां
वाचालीकुरुते तथापि नितरां त्वत्पादसेवादरः ॥ १ ॥
तापिञ्छस्तबकत्विषे तनुभृतां दारिद्र्यमुद्राद्विषे
संसाराख्यतमोमुषे पुररिपोर्वामाङ्कसीमाजुषे ।
कम्पातीरमुपेयुषे कवयतां जिह्वाकुटीं जग्मुषे
विश्वत्राणपुषे नमोस्तु सततं तस्मै परं ज्योतिषे ॥ २ ॥
ये सन्ध्यारुणयन्ति शङ्करजटाकान्तारचन्द्रार्भकं
सिन्दूरन्ति च ये पुरन्दरवधूसीमन्तसीमान्तरे ।
पुण्यं ये परिपक्वयन्ति वसतां काञ्चीपुरे माममी
पायासुः परमेश्वरप्रणयिनीपादोद्भवाः पांसवः ॥ ३ ॥
कामाडम्बरपूर्णया शशिरुचा कम्रस्मितानां त्विषा
कामारेरनुरागसिन्धुमधिकं कल्लोलितं कुर्वती ।

कामाक्षीति समस्तसज्जननुता कल्याणदात्री नृणां
कारुण्याकुलमानसा भगवती कम्पातटे जृम्भते ॥ ४ ॥

श्यामा काचन चन्द्रिका त्रिभुवने पुण्यात्मनामानने
सीमाशून्यकवित्ववर्षजननी या कापि कादम्बिनी ।
माराराातिमनोविमोहनविधौ काचित्तमःकन्दली
कामाक्ष्याः करुणाकटाक्षलहरी कामाय मे कल्पताम् ॥ ५ ॥

कामाक्षीणपराक्रमप्रकटनं सम्भावयन्ती दृशा
श्यामा क्षीरसहोदरस्मितरुचिप्रक्षालिताशान्तरा ।
वामाक्षीजनमौलिभूषणमणिर्वाचां परा देवता
कामाक्षीति विभाति कापि करुणा कम्पातटिन्यास्तटे ॥६॥

ऐक्यं येन विरच्यते हरतनौ दम्भावपुम्भावुकं
रेखा यत्कचसीम्नि शेखरदशां नैशाकरी गाहते ।
औन्नत्यं मुहुरेति येन स महान् मेनासखस्सानुमान्
कञ्चीतीरविहारिणा सुकृतिनस्तेनैव धाम्ना वयम् ॥ ७ ॥

प्रौढध्वान्तकदम्बके कुमुदिनीपुण्याङ्कुरं दर्शयन्
ज्योत्स्नासङ्गमनेऽपि कोकमिथुनं मिश्रं समुद्भावयन् ।
कालिन्दीलहरीदशां प्रकटयन् कम्रां नभस्यद्भुतां
कश्चिन्नेत्रमहोत्सवो विजयते काञ्चीपुरे शूलिनः ॥ ८ ॥

तन्द्राहीनतमालनीलसुषमातारुण्यलीलागृहैः
तारानाथकिशोरलाञ्छितकचैः ताम्रारविन्देक्षणैः ।
मातः संश्रयतां मनोमनसिजप्रागल्भ्यनाडीन्धमैः
कम्पातीरचरैर्घनस्तनभरैः पुण्याङ्कुरैः शाङ्करैः ॥ ९ ॥

नित्यं निश्चलतामुपेत्य मरुतां रक्षाविधिं पुष्णती
तेजस्सञ्चयपाटवेन किरणानुष्णद्युतेर्मुष्णती ।
काञ्चीमध्यगतापि दीप्तिजननी विश्वान्तरे जृम्भते
काचिच्चित्रमहो स्मृतापि तमसां निर्वापिका दीपिका ॥१०॥

कान्तैः केशरुचां च यैः भ्रमरितं मन्दस्मितैः पुष्पित
कान्त्या पल्लवितं पदाम्बुरुहयोर्नेत्रत्विषा पत्रितम् ।
कम्पातीरवनान्तरं विदधती कल्याणजन्मस्थली
काञ्चीमध्यमहामणिर्विजयते काचित् कृपाकन्दली ॥ ११ ॥

राकाचन्द्रसमानकान्तिवदना नाकाधिराजस्तुता
मूकानामपि कुर्वती सुरधुनीनीकाशवाग्वैभवम् ।
काञ्चीनगरी विहाररसिकाशोकापहन्त्री सता
मेका पुण्यपरम्परा पशुपतेराकारिणी राजते ॥ १२ ॥

जाता शीतलशैलसुकृतिनां दृश्या परा देहिनां
लोकानां क्षणमात्रसंस्मरणतस्सन्तापविच्छेदिनी ।
आश्चर्यं वत खेलनं वितनुते नैश्चल्यमाबिभ्रती
कम्पायास्तटसीम्नि कापि तटिनी कारुण्यपाथोमयी ॥१३॥

अक्ष्णोश्च स्तनयोः श्रिया श्रवणयोः बाह्वोश्च मूलस्पृशो-
त्तंसेन मुखेन च प्रतिदिनं द्रुह्यन् पयोजन्मने ।
माधुर्येण गिरां गतेन मृदुना हंसाङ्गना ह्रीपयन्
काञ्चीसीम्नि चकास्ति कोपि कविता सन्तानवीजाङ्कुरः ॥१४॥

खण्डं चान्द्रमसं वतंसमणिशं काञ्चीपुरे खेलनं
कालेयच्छवितस्करीन्तनुरुचिं कर्णे जवे लोचने ।

तारुण्योपज्ञनखम्पचस्तनभरीं जङ्घास्फुरत्कुन्तलं
भाग्यं देशिकसञ्चितं तव कदा सम्पादयेदम्बिके ॥ १५ ॥
तन्वानन्निजकेलिसौधसरणिं नैसर्गिकाणां गिरां
केदारं कविमल्लसूक्तिलहरी सस्यश्रियं शाश्वतम् ।
अंहोवञ्चनचुञ्चु किञ्चन भजे काञ्चीपुरीमण्डन
पर्यायच्छविपाकशासनमणेः पौष्पेषवं पौरुषम ॥ १६ ॥
आलोके मुखपङ्कजे च दधती सौधाकरीं चातुरीं
चूडालङ्क्रियमाणपङ्कजवनीवैराकरप्रक्रिया ।
मुग्धस्मेरमुखी घनस्तनतटी मूर्च्छालमध्याञ्चिता
काञ्चीसीमनि कामिनी विजयते काचिज्जगन्मोहिनी ॥ १७ ॥
यस्मिन्नम्ब भवत्कटाक्षरजनी मन्देपि मन्दस्मित-
ज्योत्स्ना संस्नपिता भवत्यभिमुखी तं प्रत्यहो देहिनम् ।
द्राक्षामाक्षिकमाधुरी मदभरव्रीडाकरी वैखरी
कामाक्षि स्वयमातनोत्यभिसृतिं वामेक्षणे तक्षणात् ॥१८॥
कालिन्दीजलकान्तयस्मितरुचिस्स्वर्वाहिनी पाथसि
प्रौढध्वान्तरुचः स्फुटाधरमहालौहित्यसन्ध्योदये ।
माणिक्योपलकुण्डलांशुशिखिनि व्यामिश्रधूमश्रियः
कल्याणैकभुवः कटाक्षसुषमाः कामाक्षि राजन्ति ते ॥ १९॥
कलकलरणत्काञ्ची काञ्चीविभूषणमालिका
कचभरलसच्चन्द्रा चन्द्रावतंससधर्मिणी ।
कविकुलगिरः श्रावं श्रावं मिलत्पुलकाङ्कुरं
विरचितशिरःकम्पा कम्पातटे परिशोभते ॥ २० ॥

सरसवचसां वीची नीचीभवन्मधुमाधुरी
भरितभुवना कीर्त्तिर्मूर्त्तिर्मनोभवजित्वरी।
जननि मनसो योग्यं भोग्यं नृणां तव जायते
कथमिव विना काञ्चीभूषे कटाक्षतरङ्गितम्॥ २१॥

भ्रमरितसरित्कूलोनीलोत्पलप्रभया
भयानतजनतमः खण्डीतुण्डीरसीम्नि विजृम्भते।
अचलतपसामेकः पाकः प्रसूनशरासन-
प्रतिभटमनोहारी नारीकुलैकशिखामणिः॥ २२॥

मधुरवचसोमन्दस्मेरामतङ्गजगामिनस्तरुणि
मजुषःस्तापिञ्छाभाः तमःपरिपन्थिनः।
कुचभरनताः कुर्युर्भद्रङ्कुरङ्गविलोचनाः।
कलितकरुणाः काञ्चीभाजः कपालिमहोत्सवाः॥ २३॥

कमलसुषमाकक्ष्यारोहे विचक्षणवीक्षणाः
कुमुदसुकृतक्रीडाचूडालकुन्तलबन्धुराः।
रुचिररुचिभिस्तापिञ्छश्रीप्रपञ्चनचञ्चवः
पुरविजयिनः कम्पातीरे स्फुरन्ति मनोरथाः॥ २४॥

कलितरतयः काञ्ची लीलाविधौ कविमण्डली
वचनलहरी वासन्तीनां वसन्तविभूतयः।
कुशलविधये भूयासुर्मे कुरङ्गविलोचनाः
कुसुमविशिखारातिरक्ष्णां कुतूहलविभ्रमाः॥ २५॥

कबलिततमः काण्डास्तुण्डीरमण्डलिमण्डना
स्सरसिजनीसन्तानानामरुन्तुदशेखराः।

नयनसरणेर्नेदीयांसः कदानुभवन्ति मे
तरुणजलदश्यामाश्शम्भोस्तपःफलविभ्रमाः ॥ २६ ॥
अचरममिषुन्दीनं मीनध्वजस्य मुखश्रिया
सरसिजभुवोयानं म्लानं गतेनच मञ्जुना ।
त्रिदशसदसामन्नं खिन्नं गिरा च वितन्वती
तिलकयति सा कम्पातीरं त्रिलोचनसुन्दरी ॥ २७ ॥
जननि भुवने चङ्क्रम्येऽहं कियन्तमनेहसङ्
पुरुषकरभ्रष्टैर्दुष्टैर्धनैरुदरम्भरिः ।
तरुणकिरणे तन्द्राशून्ये तरङ्गयलोचने नमति मयि ते
किञ्चित् काञ्चीपुरी मणिदीपिके ॥ २८ ॥
मुनिजनमनःपेटीरत्नं स्फुरत्करुणानदी
विहरणकलागेहं काञ्चीपुरी मणिभूषणम् ।
जगति महतो मोहव्याधेर्नृणां परमौषधं
पुरहरदृशां साफल्यं मे पुरः प्रतिजृम्भताम् ॥ २९ ॥
मुनिजनमनोधाम्नेधाम्ने वचोमयजाह्नवी
हिमगिरितटप्राग्भाराय स्थिराय परात्मने ।
विहरणजुषे काञ्चीदेशे महेश्वरलोचन-
त्रितयसरसक्रीडासौधाङ्गणाय नमोनमः ॥ ३० ॥
मरकतरुचां प्रत्यादेशं महेश्वरचक्षुषा
ममृतलहरीपूरम्पारम्भवाख्यपयोनिधेः ।
सुचरितफलं काञ्चीभाजो जनस्य पचेलिमं
हिमशिखरिणो वंशस्यैक वतंसमुपास्महे ॥ ३१ ॥

प्रणमनदिनारम्भे कम्पानदी सखितावके
सरसकवितोन्मेषः पूषास्तां समुदञ्चति।
प्रतिभटमहाप्रौढप्रोद्यत्कवीशकुमुद्वतीं
नयति तरसा निद्रामुद्रां नगेश्वरकन्यके ॥ ३२ ॥
शमितजडिमारम्भा कम्पातटी निकटे
चरीनिहतदुरितस्तोमासोमार्धमुद्रितकुन्तला।
फलितसुमनोवाञ्छा पाञ्चायुधी परदेवता
सफलयतु मे नेत्रे गोत्रेश्वरप्रियनन्दिनी ॥ ३३ ॥
मम तु धिषणा पीड्या जाड्यातिरेक कथं त्वया
कुमुदसुषमामैत्री पात्रीवतंसितकुन्तला।
जगति शमितोत्कम्पा कम्पा नदीनिलयास्मसौ
श्रयति हि गलच्चन्द्रा चन्द्रावतंससधर्मिणी ॥ ३४ ॥
परिमलपरीपाकोद्रेकं पयोमुचि काञ्चने
शिखरिणि पुनर्द्वैधीभावं शशिन्यरुणातपम्।
अपिच जनयन् कम्बोर्लक्ष्मीमनम्बुनि कोप्यसौ
कुसुमधनुषः काञ्चीदेशे चकास्ति पराक्रमः ॥ ३५ ॥
पुरदमयितुर्वामोत्सङ्गस्थलेन रसज्ञया
सरसकविताभाजां काञ्चीपुरोदरसीमया।
तटपरिसरैर्नीहाराद्रेर्वचोभिरकृत्रिमैः
किमिव न तुलामस्मच्चेतो महेश्वरि गाहते ॥ ३६ ॥
नयनयुगलीमस्माकीनाङ्कदानुफलेयहि
विदधति गतौ व्याकुर्वाणा गजेन्द्रचमत्क्रियां।

मरकतरुचोमाहिशावनस्तननम्रिता:
सुकृतविभवाः प्राञ्चः काञ्चीवतंसधुरन्धराः ॥ ३६ ॥
मनसिजयशःपारम्पर्यं मरन्दयरो सताक्
कविकुलगिरां कन्दं कम्पानदीतटमण्डनम् ।
मधुरललितं मत्कचक्षुर्मनीषिमनोहरं
पुरविजयिनस्सर्वस्वं तत्पुरस्कुरुते सदा ॥ ३७ ॥
शिथिलिततमोलीलां नीलारविन्दविलोचनां
दहनविलसत्फालां श्रीकामकोटिमुपास्महे ।
करधृतलसच्चूलाक्ष्मालारिचित्तमनोहरां
मनसिकृतसल्लीलां लोलालकामलिकेक्षणाम् ॥ ३८ ॥
कलालीलाशालाकविकुलवचः कैरववरी
शरज्ज्योत्स्नाधारा शशधरशिशुश्लाघ्यमकुटी ।
पुनीते नः कम्पापुलिनतटसौहार्दतरला
कदा चक्षुर्मार्गं कनकगिरिधानुष्कमहिषी ॥ ४० ॥
नमोऽस्तु ग्रन्थिभ्यस्तनगरिमगर्वेण गुरुणा
दधानेभ्यश्चूडाभरणममृतस्यन्दिशिशिरम् ।
सदा वास्तव्येभ्यस्सुविधभुवि कम्पाख्यसरितः
यशोव्यापारेभ्यस्सुकृतविभवेभ्यो रतिपतेः ॥ ४१ ॥
असूयन्ती काचिन्मरकतरुचेर्नाकिमकुटी
कदम्बं चुम्बन्ती नखकिरणचन्द्रांशुपटलैः ।
तमोमुद्राङ्कि द्रावयतु मम काञ्चीनिलयना
हरोत्सङ्गश्रीमन्मणिगृहमहादीपकलिका ॥ ४२ ॥

अनाद्यन्ता काचित् सुजननयनानन्दजननी
निरुन्धाना कान्तीं निजरुचिविलासैर्जलरुचाम्।
स्मरारेस्तारल्यं मनसि जनयन्ती स्वयमहो
गलत्कम्पाशम्पापरिलसति कम्पापरिसरे॥ ४३॥
सुधाडिण्डीरश्रीस्मितरुचिषु तुण्डीरविषयं
परिष्कुर्वाणासौ परिहसितनीलोत्पलरुचिः।
स्तनाभ्यामानम्रा स्तवकयतु मे काङ्क्षिततरुं
दृशामैशानीनां सुकृतफलपाण्डित्यगरिमा॥ ४४॥
कृपार्द्रीणी धारा कृपणधिषणानां प्रणमतां
निहन्त्री सन्तापं निगममकुटोत्तंसकलिका।
परा काञ्चीलीलापरिचयवती पर्वतसुता
गिरान्नीवीदेवी गिरिशपरतन्त्रा विजयते॥ ४५॥
कवित्वश्रीकन्दःसुकृतपरिपाटी हिमगिरे
र्विधात्री विश्वेषां विषमशरवीरध्वजपटी।
सखी कम्पानद्याः पदहसितपाथोजयुगली
पुराणी पायान्नः पुरमथनसाम्राज्यपदवी॥ ४६॥
दरिद्राणा मध्ये दरदलिततापिञ्छसुषमा
स्तनाभोगक्लान्तास्तरुणहरिणाङ्काङ्कितकचाः।
हराधीना नाना विबुधमकुटीचुम्बितपदाः
कदा कम्पातीरे कथय विहरामो गिरिसुते॥ ४७॥
वरीवर्त्तु स्थेमा त्वयि मम गिरां देवि मनसो
नरीनर्त्तु प्रौढा वदनकमले वाक्यलहरी।

चरीवर्त्तु प्रज्ञा जननि जड़िमान परिजने
सरीसर्त्तु स्वैरं जननि मयि कामाक्षि करुणा ४८ ॥
चणार्न्ते कामाक्षि भ्रमरसुषमाशिक्षणगुरुः
कटाक्षव्याक्षेपो मम भवतु मोक्षाय विपदाम् ।
नरीनर्त्तु स्वैरं वचनलहरी निर्जरपुरी
सरिद्वीचीनीचीकरणपटुरास्ये मम सदा ॥ ४९ ॥
पुरस्तान्मे भूयात्प्रशमयितु परस्तान्मम रुजां
प्रचारस्ते कम्पातटविहृतिसम्पादिनि दृशोः ।
इमां याच्ञामुरीकुरु सपदि दूरीकुरु तमः
परोपाकं मूकं झटिति बुधलोकञ्च नय माम् ॥ ५० ॥
उदञ्चन्ती काञ्चीनगरनिलये त्वत्करुणया
समृद्धा वाक् धाटीपरिहसितमाध्वीकवयताम् ।
उपादत्ते मारप्रतिभटजटाजूटमकुटी
कुटीरोल्लासिन्या शतमखतटिन्या जयपटीं ॥ ५१ ॥
श्रियं विद्यां दद्याज्जननि नमतां कीर्त्तिममितां
सुपुत्रान् प्रादत्ते तव झटिति कामाक्षिकरुणा ।
त्रिलोक्यामाधिक्यं त्रिपुरपरिपन्थिप्रणयिनि
प्रणामस्तत्पादे शमितदुरिते किन्न कुरुते ॥ ५२ ॥
मनस्तम्भस्तम्भङ्गमयदुपकम्प प्रणमतां
सदालोलं नीलं चिकुरजितलोलम्बनिकुरम् ।
गिरां दूरं स्मेरं धृतशशिकिशोरं पशुपते-
र्दृशां भोग्यं योग्यं तुहिनगिरिभाग्यं विजयते ॥ ५३ ॥

घनश्यामान् कामान्तकमहिषि कामाक्षि मधुरान्
दृशां पाशानेतानमृतजलशीतानतुपमान् ।
भवोत्पाते भीते मयि वितर पीते दृढभव-
न्मनश्शोके मूके हिमगिरिपताके करुणया ॥ ५४ ॥

नतानां मन्दानां भवनिगलबन्धाकुलधियां
महान्ध्यं रुन्धानामभिलषितसन्धानतिलकाम् ।
चरन्तीं कम्पायास्तटभुवि सवित्रीं त्रिजगतां
स्मरामस्तां नित्यं स्मरमथनजीवातुकलिकाम् ॥ ५५ ॥

परा विद्या हृद्याहृतमदनविद्या मरकत-
प्रभानीला लीलापरवशितशूलायुधमनाः ।
तमःपूरं दूरं चरणनतपौरन्दरपुरी
मृगाक्षी कामाक्षी कमलतरलाक्षी नयतु मे ॥ ५६ ॥

अहन्ताख्यातत्कबलयति हा हन्त हरिणी
हठात्संविद्रूपं हरमहिषि सस्याङ्कुरमसौ
कटाक्षव्याक्षेपप्रकटहरिपाषाणपटलै
रिमामुच्चैरुच्चाटय झटिति कामाक्षि कृपया ॥ ५७ ॥

बुधे वा मूके वा परिपतति यस्मिन् क्षणमसौ
कटाक्षः कामाक्षि प्रकटजडिमक्षोभपटिमा ।
कथङ्कारं नास्मै करमुकुलचूडालमुकुटा
नमोवाकं ब्रूयुर्नमुचिपरिपन्थिप्रभृतयः ॥ ५८ ॥

प्रतीचीं पश्यामः प्रकटरुचिनीवारकणिश-
प्रभासध्रीचीनां प्रदलितषडाधारकमलाम् ।

चरन्तीं सौषुम्ने पथि परपदेन्दु प्रविगलत्
सुधार्द्राङ्गामार्यां परिणतपरञ्ज्योतिरुदयाम् ॥ ५९ ॥

जम्भारातिप्रभृतिमकुटान् पादयोः पीडयन्ती
गुम्भान्वाचां कविजनकृतान् स्वैरमारामयन्ती ।
शम्पालक्ष्मीं मणिगणरुचां पाटलैः प्रापयन्ती
कम्पातीरे कविपरिषदां जृम्भते भाग्यसीमा ॥ ६० ॥

चन्द्रापीडां चतुरवदनां चञ्चलापाङ्गलीलां
कुन्दस्मेरां कुचभरनतां कुन्तलोद्धूतभृङ्गाम् ।
माराराते र्मदनशिखिनं मांसलं दीपयन्तीं
कामाक्षीं तां कविकुलगिरां कल्पवल्लीमुपासे ॥ ६१ ॥

कालाम्भोदप्रकरसुषमां कान्तिभिस्तर्जयन्ती
कल्याणानामुदयसरणिः कल्पवल्ली कवीनाम् ।
कन्दर्पारेः प्रियसहचरी कल्मषाणां निहन्त्री
काञ्चीदेशं तिलकयति सा कापि कारुण्यसीमा ॥ ६२ ॥

ऊरीकुर्वन्नुरसिजतटे चातुरीं भूधराणां
पाथोजानां नयनयुगले परिपान्थ्यं वितन्वन् ।
कम्पातीरे विहरति रुचा मोघयन्मेघशैलीं
कोकद्वेषं शिरसि कलयन् कोऽपि विद्याविशेषः ॥ ६३ ॥

काञ्चीलीला परिचयवती कापि तापिञ्छलक्ष्मीः
जाड्यारण्ये हुतवहशिखा जन्मभूमिः कृपायाः ।
माकन्दश्रीर्मधुरकविताचातुरी कोकिलानां
मार्गे भूयान्मम नयनयोर्मान्मथी कापि विद्या ॥ ६४ ॥

सेतुर्मातर्मरकतमयो भक्तिभाजां भवाब्धौ
लीलालोलाकुवलयमयी मान्मथी वैजयन्ती ।
काञ्चीभूषा पशुपतिदृशां कापि कालाञ्जनाली-
मुक्तं दुःखं शिथिलयतु ते मञ्जुलापाङ्गमाला ॥ ६५ ॥
व्यातन्वाना कुवलयदलप्रक्रियावैरमुद्रां
व्याकुर्वाणा मनसिजमहाराजसाम्राज्यलक्ष्मीम् ।
काञ्चीलीलाविहृतिरसिके काङ्क्षितान्नः क्रियासु-
र्बन्धच्छेदे तव नियमिनां बद्धदीक्षाः कटाक्षाः ॥ ६६ ॥
कालाम्भोदे शशिरुचि दलं कैतकं दर्शयन्ती
मध्ये सौदामिनि मधुलिहां मालिकां राजयन्ती ।
हंसारावं विकचकमले मञ्जुमुल्लासयन्ती
कम्पातीरे विलसति नवा कापि कारुण्यलक्ष्मीः ॥ ६७ ॥
चित्रं चित्रं निजमृदुतया तर्जयन् पल्लवालिं
पुंसां कामान् भुवि च नियतं पूरयन् पुण्यभाजाम् ।
जातः शैलान्न तु जलनिधेः स्वैरसञ्चारशीलः
काञ्चीभूषा कलयतु शिवं कोऽपि चिन्तामणिर्मे ॥ ६८ ॥
ताम्राम्भोजं जलदनिकटे तत्र बन्धूकपुष्पं
तस्मिन्मल्लीकुसुमसुषमां तत्र वीणाविनादम् ।
व्यातन्वाना सुकृतलहरी कापि काञ्चीनगर्या-
मैशानी सा कलयतितरामैन्द्रजालं विलासम् ॥ ६९ ॥
आहाराशं त्रिदशसदसामाश्रयं चातकानां
आकाशोपर्यपि च कलयन् आलयन्तुङ्गमेषः ।

कम्पातीरे विहरतितरां कामधेनुः कवीनां
मञ्जुस्मेरा मदननिगमप्रक्रियासम्प्रदायः ॥ ७० ॥

आर्द्रीभूतैरविरलकृपैरात्तलीलाविलासैः
आस्थापूर्णैरधिकचपलैरञ्चिताम्भोजशिल्पैः ।
कान्तैर्लक्ष्मीललितभवनैः कान्तिसौरभ्यसारैः
काश्मल्यं नः कवलयतु सा कामकोटी कटाक्षैः ॥ ७१ ॥

आधून्विन्त्यै तरलनयनैराङ्गजीं वैजयन्ती-
मानन्दिन्यै निजपदजुषामात्तकाञ्चीपुरायै ।
आस्माकीनं हृदयमखिलैरागमानां प्रपञ्चैः
आराध्यायै स्पृहयतितरामादिमायै जनन्यै ॥ ७२ ॥

दूरं वाचां त्रिदशसदसां दुःखसिन्धोस्तरित्रं
मोहक्ष्वेलक्षितिरुहवने क्रूरधारं कुठारम् ।
कम्पातीरप्रणयिकविभिः वर्णितोद्यच्चरित्रं
शान्त्यै सेवे सकलविपदां शाङ्करं तत्कलत्रम् ॥ ७३ ॥

खण्डीकृत्य प्रकृतिकुटिलं कल्मषं प्रातिभश्री
शुण्डीरत्वं निजपदजुषां शून्यतन्द्रं दिशन्ती ।
तुण्डीराख्ये महति विषये स्वर्णवृष्टिप्रदात्री
चण्डी देवी कलयति रतिं चन्द्रपीडालचूडे ॥ ७४ ॥

येन ख्यातो भवति स गृही पूरुषो मेरुधन्वा
यद्दृक्कोणे मदननिगमप्राभवम्बोभवीति ।
यत्प्रीत्यैवं त्रिजगदधिपो जृम्भते किम्पचानः
कम्पातीरे स जयति महान् कश्चिदोजोविशेषः ॥ ७५ ॥

अन्या धन्या गतिरिह गिरां देवि कामाक्षि कामे
निन्दाभिर्वा सपदि जड़तां कल्मषायोन्मिषन्ती।
माध्वी माध्वीरसमधुरताभञ्जिनी मञ्जुरीति-
र्वाणीश्रेणी झटिति वृणुयात् स्पर्धिनी स्वर्धुनीं माम्॥ ७६॥
यस्या वाटी हृदयकमलं कौसुमी योगभाजां
यस्याः पीठी सततशिशिरा शीकरैर्माकरन्दैः।
यस्याः पेटी श्रुतिपथदृशां मौलिरत्नस्य काञ्ची
सा मे सोमाभरणमहिषी साधयेत् काङ्क्षितानि॥ ७७॥
एका माता सकलजगतामीयुषी ध्यानमुद्रा-
मेकाम्राधीश्वरचरणयोरेकतानामसिन्धे।
ताटङ्कोद्यन्मणिगणरुचा ताम्रकर्णप्रदेशा
तारुण्यश्रीस्तबकितरुचा तापसी कापि बाला॥ ७८॥
दन्तादन्तिप्रकटनकरी दन्तिभिर्मन्दयानै-
र्मन्दाराणां मदपरिणतिं मथ्नती मन्दहासैः।
अङ्कूराभ्यां मनसिजतरोरङ्कितोराःकुचाभ्या-
मन्तः काञ्चि स्फुरति जगतामादिमा कापि माता॥ ७९॥
त्रियम्बककुटुम्बिनीं त्रिपुरसुन्दरीं मन्दिरां
पुलिन्दपतिसुन्दरीं त्रिपुरभैरवीं भारतीं।
मतङ्गकुलनायिकां महिषमर्दिनीं मातृकां
भणन्ति विबुधोत्तमाः विहृतिमेव कामाक्षि ते॥ ८०॥
महामुनि मनोनटी महति रम्यकम्पातटी
कुटीरकविहारिणी कुटिलबोधसंहारिणी।

सदा भवतु कामिनी सकलदेहिनां स्वामिनी
कृपातिशयकिङ्करी मम विभूतये शाङ्करी ॥ ८१ ॥

जड़ाः प्रकृतिनिर्धना जनविलोचनारुन्तुदा
नरानन निरीक्षणं क्षणमवाप्य कामाक्षि ते ।
वचस्सु मधुमाधुरीं प्रकटयन्ति पौरन्दरीं
विभूतिषु विड़म्बनां वपुषि मान्मथीं प्रक्रियाम् ॥ ८२ ॥

घनस्तनतटस्फुटत् स्फुरितकञ्चुली चञ्चली
कृत त्रिपुरशासनासुजनशीलितोपासना ।
दृशोस्सरणिमश्नुते मम कदा नु काञ्चीपुरे
परापरमयोगिनां मनसि चित्कला पुष्कला ॥ ८३ ॥

कवीन्द्रहृदयेचरी परिगृहीतकाञ्चीपुरी
निरूढ़करुणाभरी निखिललोकरक्षाकरी ।
मनःपथदवीयसी मदनशासनप्रेयसी
महागुणगरीयसी मम दृशोस्तु नेदीयसी ॥ ८४ ॥

धनेन नरमामहे खिलजनन्न सेवामहे
न चापलमयामहे भवभयान्न दूयामहे ।
स्थिरान्तनुमहेतरां मनसि किञ्च काञ्चीपुरे
स्मरान्तककुटुम्बिनीचरणपल्लवोपासनाम् ॥ ८५ ॥

सुराः परिजनावपुर्मनसिजाय वैरायते
त्रिविष्टपनितम्बिनी कुचतटी च केलीगिरिः ।
गिरिस्स रभयो वयस्तरुणिमा दरीदृश्यते
कटाक्षसरणौ क्षणं निपतितस्य कामाक्षि ते ॥ ८६ ॥

पवित्रय जगत्त्रयी विबुधबोधजीवातुभिः
पुरत्रयविमर्दिनः पुलककञ्चुलीदायिभिः ।
भवक्षयविचक्षणैर्व्यसनमोक्षणैर्वीक्षणै-
र्निरीक्षणशिरोमणिं करुणयैव कामाक्षि मां ॥ ८७ ॥
कदा कलितखेलनाः करुणयैव काञ्चीपुरे
कलायमुकुलत्विषः शुभकदम्बपुष्पाङ्कुराः ।
पयोधरभरालसाः कविजनेषु ते बन्धुराः
पचेलिमकृपारसाः परिपतन्ति मार्गे दृशोः ॥ ८८ ॥
अशोध्यमचलोद्भवं हृदयनन्दनं देहिनां
अनर्घमधिकाञ्चि तत् किमपि रत्नमुद्योतते ।
अनेन समलङ्कृता जयति शङ्कराङ्कस्थली
कदास्य मम मानसं व्रजति पेटिकाविभ्रमम् ॥ ८९ ॥
परामृतझरी प्लुता जगति नित्यमन्तश्चरी
नृणामपि बहिश्चरी परमसंविदेकात्मिका ।
महद्भिरपरोक्षिता सततमेव काञ्चीपुरे
ममान्वहमहंमती मनसि भातु कामेश्वरी ॥ ९० ॥
तमोविपिनधाविनं सततमेव काञ्चीपुरे
विहाररसिका परापरमसंविदुर्वीरुहे ।
कटाक्षनिगलैर्दृढं हृदयदुष्टदन्तावलं
चिरं नयतु मामकं त्रिपुरवैरिसीमन्तिनी ॥ ९१ ॥
त्वमेव सति चण्डिका त्वमसि देवि चामुण्डिका
त्वमेव परमातृका त्वमसि योगिनी रूपिणी ।

जय जगदम्बिके हरकुटुम्बिनि वक्त्ररुचा-
जितशरदम्बुजे घनविडम्बिनि केशरुचा ।
परमवलम्बनं कुरु सदा पररूपधर-
ममगतसम्विदो जडिमडम्बरताण्डविनः ॥ ९८ ॥

भुवनजननि भूषाभूतचन्द्रे नमस्ते
कलुषशमनि कम्पातीरगेहे नमस्ते ।
निखिलनिगमवेद्ये नित्यरूपे नमस्ते
परशिवमयि पाशच्छेदहस्ते नमस्ते ॥ ९९ ॥

समरविजयकोटी साधकानन्दधाटी
मृदुगुणपरिपेटी मुख्यकादम्बवाटी ।
मुनिनुतपरिपाटी मोहिताजाण्डकोटी
परमशिववधूटी पातु मां कामकोटी ॥ १०० ॥

करस्था श्रीकाञ्चीपुरसरणिनिष्यन्दिलहरी
शिरःकम्पा कम्पा रसतिरनुकम्पा जलनिधिः ।
घनश्यामा श्यामा कठिनकुचपीना कलयतु मे
मृगाक्षी कामाक्षी हरनटनसाक्षी निरवधि ॥ १ ॥

इदं स्मरपदप्रदं प्रकृतिपेशलं पावनं
परापरचिदाकृतिप्रकटनप्रदीपायितं ।
स्तवं पठत नित्यदा मनसि भावयन्तोऽम्बिकां
जपैरलमलं मखैरधिकदेहसंशोषणैः ॥ २ ॥

॥ इतिस्तुतिशतकं प्रथमं समाप्तम् ॥

# सहिषशतकम् ॥

॥ २ ॥

स्वस्त्यस्तु प्रथमं समस्तजगते तस्तामनस्तापत-
तस्सन्तो ये निवसन्ति सन्तु सुखिनस्ते मां शिवानुग्रहात् ।
धर्मिष्ठे पथि सञ्चरंत्ववनिपा धर्मोपदेशाद्दता-
स्तेषां ये भुवि मन्त्रिणस्सुमनसस्ते सन्तु दीर्घायुषः ॥ १ ॥
ये जाता विमलेत्र भोसलकुले सूर्येन्दुवंशोपमे राजान-
श्चिरजीविनश्च सुखिनस्तेसन्तु सन्तानिनः ।
एतद्वंशपरम्पराक्रमवशात्सभ्यास्समभ्यागता
स्तेसन्तुप्रथमानमानदिभवाराज्ञां कटाक्षोर्मिभिः ॥ २ ॥
धान्यं वाथ धनानि वा समधिकी कृत्वा मिथः स्पर्धया
मिथ्यासाहसिनोऽभ्युपेत्यवृषला देशाधिकाराशया ।
लुण्ठित्वा बहुधोपधा वितरणां तत्पूर्तये ये प्रजा
सर्वस्वंप्रसभं हरन्ति च शठास्ते यान्तु कालान्तिकं ॥ ३ ॥
कृष्यं नाम कृषीवलस्य सहजो धर्मोह्यत्यन्तरै
श्चोलेषु द्विजसत्तमैरनुचिताप्यंगीकृता सा कृषिः ।
तानेतान्वृषलाश्शपन्त्यकरुणा ये दुष्प्रवैर्भाषितै-
र्ये वातान् प्रहरन्ति तत्प्रतिकरं भूयात् कृमीणांपदं ॥ ४ ॥

राजा दुष्टमतिं गतोपि सचिवास्तं वञ्चयन्त: खला-
देशद्रोहपरास्सदैव वृषलास्सर्वापहारोद्यता: ।
आशां मा कुरु चोलदेशकृषये त्वं सैरिभात: परं
शिष्टं मेत्त्वलमल्लकं तदपि च भ्रातस्तवाप्यन्तत: ॥ ५ ॥
नानाजिप्रभुचन्द्रभानुहजीन्द्रानन्दरायादयो
विद्वांस: प्रभवोगताश्श्रुतसुधोसन्दोहजीवातव: ।
विद्यायां विषतुल्ययोर्हि वृषलास्सन्त्यद्य इदानीन्तना
किं कुर्वेऽम्ब कुपे व्रजामि शरणं त्वामेव विश्वावनीं ॥ ६ ॥
विद्याजीवनकुण्ठनेन च कृषावालम्बितायां चिरा-
दापन्ने कणिशे कुतोपि पिशुना: केदारमाहृत्य ते ।
हा किं तत्कथयेह वालुमणियं मे पुत्रिहस्ताक्षरं
हर्तारस्स्थलसम्मतीमुञुमुदारित्यादयो निर्दया: ॥ ७ ॥
दुर्भिक्षं कृषतोनहीति जगति ख्यातं किल ब्राह्मणा-
मापद्धर्मतया मनौ च कृषिगोरक्षादिकं सम्मतं ।
भूपेष्वर्थपरेषु हन्त समये चुक्षोच दुर्भिक्षतो
ह्यत्यर्थं कृषिमाश्रयेम भुवि न: किम्वाततोहीयते ॥ ८ ॥
अक्षैर्मेति ननु श्रुतिस्मृतिपथं प्राय: प्रविष्टा न किं
सौख्यं वा हलजीविनामनुपमं भ्रातर्न किं पश्यसि ।
किं वक्ष्ये तदपि क्षितीश्वरवहिर्द्वारप्रकोष्ठस्थलो
दीर्घावस्थितिरौरवाय कुरुषे हा हन्त हन्तस्पृहां ॥ ९ ॥
तानाश्रित्यचिरं खलान्मधुमुचावाचा च नुत्वा वहु
श्रान्तोहं विफलश्रमस्तदुपरि द्राग्वैश्यकर्माश्रित: ।

निष्काशयितुमशक्तान्वतीर्थमहिषाभिख्यानुपेत्य प्रभून्
सम्यक् तैः परिरक्षितश्च कृतवित् स्तौम्यद्य हर्षेण तान् ॥१०॥

यं यो रक्षति तस्य सः प्रभुरिति स्पष्टं हि मद्रक्षिणो
राज श्रीमहिषान्विनुत्य सफलं कुर्वेद्य वाग्वैभवम् ।
मत्पीडानिरतान्मदीयहिमाभिज्ञानशून्यान्प्रभून्
यन्निन्दामि निशम्य तद्गुणविदस्तुष्यन्तु सन्तो नृपाः ॥ ११ ॥

कश्चित्पक्षधमं तुलाय विगुणं कर्तुं प्रवृत्तं स्मृतं
त्वामालम्ब्य समुत्सहे न खलु तद्दर्पस्य माहात्म्यतः ।
मद्द्रोहप्रवणाधिकारि हतक क्रोधेन तन्निन्दन-
व्याजात्त्वत्प्रभुतत्प्रभुष्वपि च वाक् दण्डो मया पात्यते ॥ १२ ॥

द्वारे भाग्यवतामकृतादरतया लब्ध्वावमानं महत्
मत्कृष्यार्जितसर्वलुण्ठितसुभेदारेषु चामर्षतः ।
व्याजीकृत्य हयद्विषं परिवृढायेमी मया निन्दिता-
स्तेऽद्याप्यन्तु परं निरङ्कुशतया सम्मानयन्तः कवीन् ॥ १३ ॥

श्रुत्वैतन्महिषप्रबन्धमिह ये भूपा गुणग्राहिण-
स्ते बुद्ध्वा निजदुर्गुणान् कविमुखात्तद्वंश्यमर्यादया ।
अद्रोहेण निजाः प्रजा इव यथाधर्मं प्रजा रक्षितुं
कुर्वन्तु स्वकुलक्रमागतनरान्देशाधिकारोचितान् ॥ १४ ॥

दुग्धान्स्निग्धनिकान्मामदमषीदिग्धान्विदग्धानहो
जग्धौ यश्चिषुदग्धबुद्धिविभवान् स्निग्धैः खलैरन्वहम् ।
धन्यं सैरिभमेकमेव भुवने मन्ये किमन्यैर्नृपैर्यो धान्यैश्च
धनैश्च रक्षति जनान् सर्वोपकारक्षमः ॥ १५ ॥

स्तोतुं त्वां महिषाधिराजसुगुणं मीमांसते धीर्मम
त्वञ्च स्तुत्यतया प्रबन्धवचसां योग्योऽसि किन्त्वन्वहम् ।
वित्तोन्मत्तनरेन्द्रदुर्गुणघटामिथ्यास्तवोपक्रमै-
र्वाग्भिः पर्युषिताभिरद्य भवतः कुर्वे नुतिं क्षम्यताम् ॥ १६ ॥
श्वाकारकपिशानभिक्षुयवनान्पुंवत्सगब्बालिका
सूचीसक्थविशेषकोद्रवतिलश्यामाकगोधूमकान् ।
त्वं सिद्धार्थकुलित्थगञ्जतुवरीनिष्पावमाषादिकान्
तत्तं कालमुपेत्य सैरिभपते निष्पाद्य संरक्षणः ॥ १७ ॥
आर्य श्रोत्ररसायनीभिरमिमां दृष्ट्वा महापण्डितो
विद्यायै न स्पृहते यद्यपि परं चान्नं बिभर्त्यादरात् ।
वाणिज्यं धनमूलकं न हि खलस्यत्युर्यामितस्त्वन्मते
त्वं विद्या च धनं त्वमेव सकलं त्वं मे कुलाय प्रभो ॥ १८ ॥
निद्रालुत्क साहसं शृणु वचो वक्ष्यामि यत्ते हितं
त्यक्त्वाश्रामद्रुमलसैरिभपते निर्व्याजबन्धुं नृणाम् ।
श्रीरङ्गाभिधपट्टणं प्रति सखे मागाज्जवस्त्वालये
दूरे श्रीनिकटे ह्यनान्तमहिषश्रेणीयघण्टारवः ॥ १९ ॥
प्रज्ञापण्यविशेषविक्रयवणिक् ज्ञानसुधीशोधरः
ह्यत्त स्वर्णमभूद्गताश्रुमखिलोऽधिक् तस्य षट्दर्शिनीम् ।
स्थानः कुट्टिकविप्रदुर्धनिगृहद्वारेषु निद्रायते
तत्सर्वं महिषेश्वरानुसृतेदौर्भाग्यधाम्नः फलं ॥ २० ॥
न ब्रूषे परुषं न जल्पसि मृषावादं न गर्वोन्नतिं
धत्से प्रत्युत लाङ्गले नियमितं स्वं कर्षयित्वा वपुः ।

मर्त्यानामनुपाधिजीवनकृते त्वं कल्पसे काश्येसर
त्वं सातिदुर्नृपाननुसरन्हन्तास्मग्रह वञ्चितः ॥ २१ ॥
त्वं क्रीतोसि मया पणैः कतिपयैर्भर्तुं कुटुम्बं निजं
त्वन्तु प्रागधमर्णतामिव भजन् स्वां क्लेशयित्वा तनूम् ।
नानाधान्यसमुद्भवैर्यदकरोस्त्वन्मां तथा निर्वृतं
तत्तेश्रीमहिषाङ्ग तैरुपकृतैः क्रीतोस्मि मूल्यं विना ॥ २२ ॥
पैशून्यं न हि कर्णगामि भवतोनाप्यस्ययेवञ्चनां
एकाकारतएवतिष्टसि सखे सर्वास्ववस्थासु च ।
भूपालैरलमव्यवस्थहृदयैर्दिष्ट्याद्य लब्धोसि न-
श्रीमन्कासरसार्वभौमभवता नाथेन मोदामहे ॥ २३ ॥
त्वं बद्धोसि मनगुणैर्दृढमहोबद्धोस्मि च त्वद्गुणै-
स्त्वं मां रक्षसि सैरिभोत्तमसखेरक्षामि च त्वामहम् ।
इत्यन्योन्यकृतोपकारमुदितावावामिहद्वावपि
स्थास्यामश्शरदांशतं द्रुतममी नश्यन्तु नश्शत्रवः ॥ २४ ॥
मत्ताविन्तमदेद्दुरात्महृतनास्वण्डालरण्डासुता
येमीड्यधनिकानि कामपरुषव्याहारकौलेयकाः ।
तेषां वक्त्रविलोकनात्तव वरं स्थूलाण्डकोशे क्षणं
येन श्रीमहिषेन्द्रलभ्यतइह प्रायेण मिष्टाशनं ॥ २५ ॥
देहं स्वं परिदण्ड्य यद्धि भवता धान्यं धनं वार्जितं
तत्सर्वं प्रसभं हरन्ति हि शुभे दाराःस्वकीयं यथा ।
हेतुस्तत्र किलायमेव महिषज्ञातो मया श्रूयतां
सुताएवपितुर्हरन्ति हि धनं प्रेम्णा बलाद्वाखिलम् ॥ २६ ॥

तृदावां यदि यासि कासरपते तर्हीदमाकर्ण्यतां
अस्माभिर्हि तृणीकृतान् भुवि सुमेदारान् सुखं भक्षय।
निस्सारानपराधलेशरहितानेतान् पलालोत्करा-
न्नित्यं भक्षयता त्वया क इव हा लोकोपकारो भवेत् ॥२७॥

तृष्णादानजलावगाहनतनूसंघर्षणादिक्रमैः
कामं कैरिभरा जराजभवतः सेवामकार्षं चिरम्।
एतावत्यहमर्थये पितृपतिं देवं त्वदारोहिणं
क्षिप्रं प्रापय सन्निधिं ननु सुमेदारस्य मद्रोहिणः ॥२८॥

कायक्लेशमहर्निशं विदधता द्राघीयसानेहसा
केदारे भवनान्तराय बहसे निष्पादितं यत् फलम्।
त्वद्भागेन समं समस्तमपि तद्येनैव नीतं बलात्
तं क्षिप्रं यमसन्निधिं नय तुलायाधीश तुभ्यं नमः ॥२९॥

तिष्ठन्तु क्षितिपा भुविस्मयभरप्रागभावदूरीभवत्
कन्याकृत्यविवेकमूढमनसो नैवाश्रये तानहम्।
एहि त्वं सरसीतटं तव पुनर्मूर्धाभिषेकं जलै-
र्बल्लवसम्भावनायकरवै राजेन्द्र संरक्ष नः ॥३०॥

भूपो भूप इतीव किं त्वनुगता जातिर्भटघाटवत्
भूमावस्ति स एव रक्षति जनान्राजा स एव स्वयम्।
किं भूमीपतयः सुरारय इमे क्राराः किराता इव
प्रायस्सर्वजनीन कासरपते राजा त्वमेवासि नः ॥३१॥

## अथ श्लेषः ।

सानन्दं महिषीशतं रमयसे मूर्धाभिषिक्तोऽन्वहं
त्वं बालव्यजनावधूतिमसकृत्प्राप्नोषि शृङ्गान्वितः ।
किञ्च स्वां प्रकृतिं न मुञ्चसि तृणप्रायं जगत्पश्यसि
स्वस्ति श्रीमहिषेन्द्र तेऽस्तु नियतं राजा त्वमेवासि नः ॥३२॥

धात्रुग्रस्रान्तरले विमुञ्चसि मुहुर्विण्मूत्रमस्ततपं
धत्से नाप्यपलालमास्यमनिशं स्नेहेन सम्वर्ध्यसे ।
शश्वच्यापि पयः पिबस्यनुदिनं तस्मादद्दन्तं मुखे
वत्स श्रीमहिषेन्द्र बालकमिव त्वां वीक्ष्य नन्दाम्यहम् ॥३३॥

क्षान्तं क्षान्तमथापि निर्दयसमीकाष्ठैः करीषैरपि
घ्नन्त्यङ्गेषु जनास्तदेतदखिलं दुःखं क्षमामूलकम् ।
इत्यालोच्य रुषैव सैरिभपते सीराञ्चलेन क्षमा-
मुन्मूल्य प्रसभं करोषि कणशस्तां नीरसस्योचिताम् ॥३४॥

ब्रूषे त्वं विविधान् स्वरान् बहुविधान् काण्डांश्च धत्से मुखे
प्रातश्चाध्ययनं पदक्रमविधिं किञ्चोच्चरन् गच्छसि ।
अङ्गेषु श्रममादधासि बहुधा बहुधा वृत्तिं करोष्यन्वहं
भासि त्वं महिषाधिराज नियतं वेदावधानीव नः ॥३५॥

मुद्राधारणदग्धचर्मकतया दृश्यैः किणैरङ्कितो
मध्याह्नात्परमेन मज्जसि जले सानन्दतीर्थादरः ।
शान्ताङ्गाररुचिं बिभर्षि च तनौ तिष्ठन्यते दण्डिनो
मुण्डाचार्यमिवाधुनानुकुरुषे श्रीमन्महासैरिभ ।३६॥

धत्से शृङ्गयुगं प्रततमभितो गात्रे प्रतप्ताङ्कनं
श्रीरामानुजमण्डलस्य सदृशं चिह्नं च वक्त्रे मुखे।
गोष्ठीभूय निजप्रबन्धसमये क्रन्दस्य मन्दारवं
तन्नूनं महिषाधिराज भवसि श्रीवैष्णवाग्रेसरः॥३७॥

त्वां वाचंयमतां दधासि सहसे शीतातपौ निश्चलः
किञ्चिन्नैव च याचसे कुचि यथा जातात्मना तिष्ठसि।
प्राणाकर्षणतायसे न विदने नारूढ एवासि च
प्रायः कासर हे सदाशिव महायोगीव संदृश्यसे॥३८॥

शृङ्गाग्रेण मुहुर्मुहुर्निजतनुं वाकण्डूयसे मौनवान्
प्राग्वंशोपहितां प्रविश्य विपुलां शालां महिष्या समम्।
अन्तस्तिष्ठसि धूलिधूसरतनुः कृष्णाजिनाच्छादितः
तस्मै भासि लुलाय दीक्षित इव त्वं वाजिमेधक्रतौ॥३९।

यास्तोमि श्रवणादिभिः परिचयात्त्वामममर्शं कर्तृ
सत्यज्ञानमयोऽसि किन्तु बृहदारण्यान्तरे दृश्यसे।
प्रत्यक्षीक्रियसे च योगिभिरखण्डाकारवृत्त्या स्वयं
तस्मात्पुच्छमयं लुलाय परमं ब्रह्मत्वमेवासि नः॥४०॥

गोत्राछेदनकोमलं प्रथयसे हस्त्यागलालिङ्गनं
प्रत्यूषे कुरुषे सकुक्कुटरवे बह्वप्सरस्सादृतः।
स्वस्थाने मुदितस्वरूपगतया युक्तश्रिया सन्तृहं
गोष्ठे तिष्ठ लुलायराजमहतीं देवेन्द्रलक्ष्मीं वहन्॥४१॥

नित्यं धीरमनासि कर्षसि सदा रत्यां समुत्साहवान्
दग्धानामुपमासि मासि तपसि ज्याकर्षणेनोज्झितः।

सामर्थ्यं विषमेषु कर्मसु भजन्नग्रे वसन्तं स्पृशन्
सत्यं श्रीमहिषेन्द्र मन्मथ इव प्रयत्नमालक्ष्यसे ॥४२॥
मूर्त्तिं हन्त बिभर्षि नीलमसृणां नित्याभिषिक्तां नरै-
र्ग्राह्यः पक्षपचक्रतः कलयसि त्वं बन्धमोक्षानपि ।
सुक्षेत्रे श्रियमादधासि महता ज्ञानेन पूज्योऽसि तत्
सालग्राम इवावभासि नियतं श्रीकासराधीश्वर ॥४३॥
गम्भीरम्भिमितो न कम्पसयसे गह्वोऽस्य पानेन च
प्रायः किन्तु सदाशनक्रमकरो नित्यं न दोनोऽसि च ।
संपूर्णः पृथुरोमभिश्च भजसे वृद्धिं चयं चाप्यषि
तत्त्वं कासरमण्डलेश्वर जलप्रायस्समुद्रोऽसि नः ॥४४॥
अर्कं भक्षयितुं प्रधावसि नवं हत्यं जनानन्दनो
निःशङ्कं कुरुषे समुद्रतरणं प्रत्यक्षमाधावसि ।
वीर्याधिक्यवशादुपर्युपरि चोत्साहं च कामं भजन्
मन्ये श्रीमहिषाधिराज भुवनेष्वन्योहनूमान् भवान् ॥४५॥
लोके ख्यातसहस्रदोषमखिलद्वीपेषु सञ्चारिणं
क्रीडन्तं किल नर्मदाम्बुनि मुदा कीर्त्या समालिङ्गितम् ।
सम्यग्भूषितमादरात्सदसि सम्मर्देष्वपास्तत्रसं
प्रायस्सैरिभमन्वते भुवि जनास्त्वां कार्तवीर्यार्जुनम् ॥ ४६ ॥
उल्लेखान्विविधान्करोषि च पदन्यासन्तथान्याहृशः
पद्यालोकनदत्तदृष्टिरसि च प्रायः प्रबन्धे स्थितः ।
कोशाधारतया स्थितश्च रसिकप्राये स्थले सादरः
तेन श्रीमहिषाधिराज सुकविं त्वामेव मन्यामहे ॥ ४७ ॥

तर्णैर्नैकविधैर्युतोसि चरसाधारोसि वन्धोज्ज्वलो
हृत्तात्मा ध्वनिगर्भितश्च बहुभिः पादैरुपेतोसि च।
तत्सत्यं महिषेन्द्रसत्कविकृतश्लाघ्यप्रवन्धायसे
त्वामालोक्य पुनः पुनर्नवरसालङ्कारमीहामहे॥ ४८॥
त्वं मध्यस्तनपीडनेन रचयन् शृङ्गारलीलाचता-
न्यापीतैरधरामृतैश्च सरसत्युन्मीलिताचस्स खैः।
आकृष्टः प्रसभं सरोमजनया तापाच्चिरेगातनोः
पद्मिन्या रसिकाग्रणीरिव लुलायाधीश्वसंक्रीडसे॥ ४९॥
आशां पुष्यसि यो निपानसलिले येनाभिमूलान्वितः
प्रीत्या नित्यमपारलौकिकविधावङ्गीकृतः कैरपि।
स्वच्छन्दं चरतीह यः किल परचेत्रे खलाग्रेसरः
तत्त्वां हन्त विटाग्रगण्यमधुना मन्ये महासैरिभ॥ ५०॥
प्रीतिस्फुटदङ्गतः कलयसे तालप्रमाणन्तनौ
चातुर्यं बहुलास्य कर्मसु नृणां सन्दर्शयन्व्यञ्जकं।
कुर्वन् स्त्रीयपरिश्रमाद्बहुविधाद्र्यासभारञ्जनं
सत्यं सैरिभमण्डलेन्द्र भरताचार्यत्वमालम्बसे॥ ५१॥
त्वं मृत्युञ्जरणं करोषि भृशमुन्मज्जन्निमज्जन्मुहुः
पारावारपयोन्तरालविहृतिप्राप्तप्रमोदोत्सवः।
संप्राप्नोषि ततो विधिं बहुमुखं प्रीत्यागमेष्वादरा-
त्तन्नूनं महिष चितीश्वर भवान्मत्स्यावतारो हरिः॥ ५२॥
वज्रादप्यतिनिष्टुरं तव पुनः पृष्ठं धराधिष्ठितं
निश्वासास्तु पयोनिधेरपि पयःप्रचोभदृचाइसे।

क्षीयत्वे न च कच्छपालिषु सदा प्रीतिन्दधास्याग्रवे
तन्नस्त्वं महिषेन्द्र सत्यमधुना कूर्मावतारो हरिः
उत्साहेन पुरा वराहवपुषा शृङ्गेण गामुद्धर-
स्तुद्रामात्मगुणस्थितस्त्ववदनं व्याहृत्य चालोकसे ।
लोकं भुवनानि पातु महते वक्षे महाविस्तृते
तत्त्वां श्वेतवराहमूर्तिमधुना जाने महासैरिभ ॥ ५४ ॥
येनत्रस्य हिरण्यवर्धनकृतः प्रह्लादमापुष्णतः
प्रासस्योपनिषद्वरं पृथुतरस्त्वात्तोऽहिनिर्यन्तः ।
लोकानां स्थितये भृतस्य च निजाङ्केदारलक्ष्मीं परां
कोऽभेदस्तव कासरेश्वर विभो श्रीमन्नृसिंहस्य च ॥ ५५ ॥
कौपीनाङ्कतया चिरात्मि चरसि त्वं दण्डहस्तान्वितः
कोलाहं बलिना समङ्कजयसि स्पर्धी प्रतिस्पर्धिना ।
पादन्यास्य रसातले स्ववपुदा त्वं गुप्तरं गाहसे
तेन त्वां महिषर्षिनिक्रमकृतं नारायणं मन्महे ॥ ५६ ॥
निर्धूतोऽपि लकरानु गुरुनदे लीलां महारेणुकां
मूढं मूढमशेषकण्टकुलं चामूलमुन्मूलयन् ।
कीलालैर्भरितेषु विस्तृतनरस्वाकरेषु सन्तुष्टधी-
र्वत्से भार्गवराममसाम्यमधुना जाने महासैरिभ ॥ ५७ ॥
मञ्जूषाञ्चितरौद्रदन्तसुदृढन्याकर्षरक्षातिकान्
सीतायां प्रणयं करोषि न जनस्थाने च वत्से भयम् ।
वाहिन्यां कुरुषे तथा शरमिच्छेदं यथेष्टं चरन्
रामस्त्वं निजलक्षणान्वितया श्रीमन् लक्ष्मायसे ॥ ५८ ॥

दुष्प्रापो बहुधा वनेरसि महासत्वप्रकर्षोद्धतै-
र्नूनं काञ्चन कासरेन्द्र चरसि त्वं सर्वतः पर्वतः॥ ६४॥
भीष्मस्त्वं हि दृशा नलोसि च नृगस्त्वं ह्रस्वरोमाप्यमि
भ्रातस्त्वं भरतः पृथुश्च तरसा नूनं मरुत्तोऽधिकः।
इत्थं पुण्यपुराणभूपतिमपेत्वय्यद्भुतेजाग्रति
श्रीमन्सैरिभराजराजहतकान्नालोकयामः खलान्॥६५॥
कर्णं निर्णुदसि त्रिगर्तपतिनोधूनोषि तज्जीवनं
द्रोणं सन्ततमुच्चरस्यपि गृहे नित्यं सुभद्रान्वितः।
हन्तुं सैन्धवमीश्वरेण विहितं सामर्थ्यमासेदिवान्
धीरश्रीमहिषाधिराज भवनी मन्ये त्वमेवार्जुनः॥ ६६॥
वेगादर्जुनमेव धावसि दृढं त्वं कालपृष्ठं स्मरन्
भीमं मुञ्चसि किञ्च भूरि निनदन्धत्सेऽङ्गलक्ष्मीं स्थिराम्।
वाहिन्यां प्रसभं प्रविश्य कुरुषे क्षोभं प्रतापान्वित-
स्तस्मात्कर्ण इवाङ्ग सैरिभपते किं कामानवस्यर्थिनाम्॥६७॥
लोके त्वं हि स धर्मराडसि महान् भीमोस्य पार्थोपि न
द्रोणीभूतमुखोसि कासरपते किं चासिना सत्यभूः।
उक्षोषेण च कर्णशल्यमयसे भूरिश्रवो भीष्मतां
त्वत्सन्दर्शनतोद्य भारतकथा प्रत्यक्षमालक्ष्यते॥ ६८॥
ज्यामाकर्षसि सङ्गतार्त्तिमहतीं मध्ये शराणां चरन्
धन्वाकर्षणविश्रुतः प्रकटयन् दोषं स्वकैः कर्मभिः।
आलोक्यापि न भीतिमञ्चसि परान् प्राप्तोऽन्ध्यो विग्रहे
वीराग्रेसर कासरेश्वर ननु द्रोणस्त्वमेवासिनः॥६९॥

सुग्रीवोसि महागजोसि वपुषा नीलः प्रमाथी तथा
धूम्राश्वासि महानुभावमहिष त्वं दुर्मुखः केसरी ।
इत्थं ते सततं महाकपिशताकारस्य साहाय्यतः
सीतां प्राप्य विलङ्घ्य दुःखजलधिं नन्दामि रामः स्वयम् ॥ ७०॥

त्वं वाली रमसे क्षमामुपगतः प्रौढाङ्गदेहान्वित-
स्ताराभैरनिह स्फुट वितनुषे नादैर्जयन् दुन्दुभिम् ।
इत्थं सत्यपि कासरेश्वरजनस्याश्चर्यदाश्चर्यया
मातङ्गान्तिक एव निर्भयमहो सञ्चारशीलोसि किं ॥ ७१॥

उच्चैरावणसोदरोसि च महापार्श्वोतिकायोसि चा-
त्यन्ताकारमहोदरोसि नितरां त्वं मेघनादोप्यसि ।
धूम्राक्षोसि च दूषणोसि चरिते त्वं कुम्भकर्णोप्यतः
सङ्ग्रामस्त्वदुपाश्रयेण भजतेलङ्कारमाधारतां ॥ ७२॥

सीतायां प्रसितो हठं कृतयुगव्यापारघोरक्रमो-
दर्पोज्जृम्भितहैहयाधिपहतिश्रान्तो लुलाय प्रभो ।
प्रख्यातोप्यनरण्य एव विषयेप्युत्कृष्टधन्वा जवान्
मायावी सहि रावणः पुनरिह प्राप्तोसि किं मङ्क्षु हि ॥ ७३॥

ताम्रश्मश्रुमुखोसि नैव सहसे क्रीडाहतिं मानवैः
कामं बाडववैरमाकलयसे रोषेण नैसर्गिकम् ।
सम्प्रीतिं तरसादने वितनुषे त्वामद्य पानोत्सुकं
चन्द्राख्यानमवैमि यत्तव खुरानाश्चर्यमालोकये ॥ ७४॥

द्वन्द्वे प्रीतियुतः क्वचित् बहुव्रीहिप्रकर्षः क्वचित्
पश्चात्तत्पुरुषान्वितः कृतसमाहारः क्वचिच्च क्वचित् ।

शब्देषु द्विगुणादरं कलयसि श्रीकामराजेश्वर
शायश्शाब्दिकवर्गवर्तिनमिह त्वामेव मन्यामहे ॥७५॥
त्वं शक्तिं दधासि च पदेष्वद्धा जहल्लक्षणा
स्वातन्त्र्यं पृथगस्य शब्दविषयेष्वासक्तमुर्वीं भजन् ।
भूयो दर्शनमेषि लिङ्गकरणप्रामाण्यसम्भावितः ।
कथ्यायां श्वसितं ततोऽद्य महिप त्वां तर्कये तार्किकम् ॥७६॥
सूत्राणि प्रसभं महाप्रतिभयोत्साहेन यः खण्डयन्
भाष्यावाङ्मुख एव चाधिकरणप्रौढिं परां दर्शयन् ।
सङ्घर्षे सति वाङ्नैर्विजयिता सिद्धान्ततोगाहसे
तेन त्वं महिपावतंस न कथं मीमांसकाग्रेसरः ॥७७॥
मालिन्यास्पदमुच्चकैस्तव वपुर्गोत्रापुनस्स्रग्धरा
नित्यं जाङ्गलभूमिषु त्वमयसे शार्दूलविक्रीडितम् ।
काठिन्यं वपुषा बिभर्षि नितरां किञ्चेन्द्रवज्राधिकं
इत्यात्मा भजसि प्रबन्धपदवीं वाहद्विपत्क्ष्मापते ॥७८॥
शृङ्गारं रुचिरन्दधास्यनुपदं वीरेण सञ्चार्यसे
कृत्वा भूरि दयान्वितः प्रतिभयं हास्यं वहस्यद्भुतम् ।
उद्घोषं विकृतं करोषि बहुधा रौद्रं मुहुर्वीक्षसे
सायन्दामनिशान्तभाक् नवरसस्त्वत्व सम्राट् प्रभो ॥७९॥
जिष्णुस्त्वं हि कृशानुभावमयसे श्रीकामराजापते
नित्यं किञ्च सदन्तकोसि वपुषि गाम्येऽस्ति ते निर्ऋतः ।
पाशी चासि सदाशुगत्वमयसे सर्वत्र कथ्यादिषु
प्रायो वैश्रवणोच्छ्रयं प्रकटयन् किञ्च त्वमुग्राकृतिः ॥ ८० ॥

सीताख्यश्चसि पश्च लाङ्गलविधौ लब्धार्द्रकृष्णाजिनो
गोदानेषु सहस्रश: प्रतिदिनं पात्रीभवस्यात्मना।
त्वं ब्रह्माण्डकटाहमश्नसि समुद्वाधेण लब्धा त्वया
क्वापि स्वर्णतुलापि कासर ततोदीर्घायुरिच्छामि ते॥ ८१॥
पर्णानां पयसाञ्च नित्यमशनैः कालं क्षिपन्वर्तसे
निष्कम्पस्तपसि स्थितोसि निभृतं त्वं पर्णशालान्तरे।
शेषे स्थण्डिल एव चानुदिवसन्त्रिर्निमज्जस्यपि
प्रार्थ्यं तत्त्वककासरेन्द्र यदृषिस्वर्यां समालम्बसे॥ ८२॥
शीतं वारि वियोग एव हि पिबस्याकण्ठमत्यादरात्
सन्तापिष्यतनु प्रमोदभरितोन ग्राम्यधर्मान्वितः।
यच्चित्रं सुखसन्निपातरहितः पुष्णासि पुष्टिन्तनो
तन्मे ब्रूहि किमौषधं महिष रे स्नात्य त्वया भक्षितम्॥ ८३॥
स्त्रीयोत्सङ्गतलाधिरूढमधिकासक्तं वहन्नात्मजं
बालञ्च प्रमदान्वितस्सुखमहो निद्रासि निश्चिन्तधीः।
दुर्भूपास्त्वमपास्यनैकविकृतिप्रारब्धलब्धेन च
प्रीतस्तिष्ठसि कासरोत्तरभवन्नार्हस्यमेदाद्भुतम्॥ ८४॥
नित्यं दुर्धरदुर्मुखादिसहितश्शुम्भाग्रकष्टाचल:
प्रागस्त्वं महिषश्च एव धरणीं हन्तावतीर्णः पुनः।
किन्तु प्राग्युगानुभूपचरितस्सर्वोपकारी भवान्
अतः कासरवर्यनिर्जरगणाः कुर्वन्तु ते मङ्गलम्॥ ८५॥
पीत्वा वारिसरोवरेषु विपिने स्वैरञ्चरित्वा तृणान्
आकाल्यादपि मा पराक्रमविगमात्कृष्ट्वा महीं सर्वतः।

श्रे रचन्त्यनुपायमेव भुवनं सन्त्यज्य तान् सैरिभान्
धिक्धिग्धनिगर्दभान्मृगयते सेवार्थमज्ञोजनः ॥ ८६ ॥
त्वामादौ गणयन्ति मूढगणनप्रस्तावनायाञ्जनाः
ते मूढा महिमाविदस्तवनतां ब्रूयामि ते वाच्यताम् ।
सस्योत्पत्तिनिदानमस्यथ हविर्मूलं सुराणामसि
ब्रूमः किं बहु कासरेन्द्र जगतामाधारताङ्गाहसे ॥ ८७ ॥
अष्टास्वभ्रमुवल्लभवादिषु भवानेकस्त्वमनागतः
किं वा जङ्गमताङ्गतः कुलगिरिष्वेकस्त्वमत्युन्नतः ।
आहोस्विन्महिषासुरस्त्वमधुना हन्तावतीर्णः पुनः
ब्रूहि श्रीमहिषेन्द्र विस्मयभरस्मेयं मदीयं मनः ॥ ८८ ॥
उद्दामद्विरदद्वयद्वयसता मुस्तैर्बलं निस्तुलं
दुर्भेदाङ्गतमालभूमिदलजेष्वग्रे सरस्त्वं सदा ।
तत्सर्वं महिषावतंस कृषिभिस्संसारपोषार्थिनो
मन्ये हन्त पचेलिमामिह पुनर्मद्भागधेयोन्नतिम् ॥ ८९ ॥
मूर्ता किं तमसाञ्छटा किमथवा नीलाचलो जङ्गमो
जीमूतः किमु सञ्चरिष्णुरवनौ पद्भिश्चतुर्भिर्युतः ।
इत्येवं किल तर्कयन्ति मसृणत्वङ् मांसलश्यामल
येषां सैरिभमण्डलेश्वर दृशोः पन्थानमारोहसि ॥ ९० ॥
भ्रातस्सञ्चर मा कदाचन बहिर्वाहारिचूडामणे
त्वामालोक्य समुन्नता कृतिधरं सञ्चारिणं शृङ्गिणम् ।
कोप्येष क्षितिभृद्गतो पुनरसावित्याग्रहो दुर्मधी
जंभारिस्तवडम्भनाशन कृते दम्भोलिमुत्तम्भयेत् ॥ ९१ ॥

तस्मै शृङ्गयुगाय तेऽतिमहते कल्याणमाशास्महे
श्रीमन् सैरिभ सूमहेन्द्रशिखरोन्नीढाचलाय क्षणात् ।
तत्तादृक् शतकोटिकोटिषु परित्यक्तादरो भूयसा
यस्मै सन्ततमुच्चकैः स्पृहयते देवोऽपि संक्रन्दनः ॥ ८२ ॥
न स्वप्नेऽपि दरिद्रता प्रव्रजति त्वामाश्रितानां नृणां
कोशा धान्यचयैः पतन्ति बहवः कोशेषु च व्रीहयः ।
इत्थं सर्वजनावनप्रतिभुवे दीनावलीबन्धवे
भूयस्यो महिषाधिराज भवते भूयासुराशीशिषः ॥ ८३ ॥
कर्षन् कर्षमहर्निशं वसुमतीं क्लिश्नासि किं कासर
त्वं सभ्यैरधुनातनैर्नृपसभं साकं सुखिनावस ।
न ज्ञानं न च मैस्ति कौशलमिति व्यर्थां मतिं माकृथा
त्वत्तो मूढतमा इमे भवसि हि त्वं तेषु वाचस्पतिः ॥८४॥
निष्पर्यूहविवर्धमानसुमहादुःखाभवोत्साहव
हृद्भूपालकृपालवच्युतरुशल्याकर्णनोद्दीर्णयोः ।
निर्व्याजं मम कर्णयोस्त्वमसृतं हुङ्कारवच्छद्मना
दिष्ट्याद्यप्रभृति सिञ्चसीव महिष चेद्वेषु कथ्यं त्वं खः ॥८५॥
दुर्वाशीकसमुद्यदुद्भटभट भटश्रेणीकरव्यापृत
द्राघीयस्फुटधूमवर्तिविगलद्धूमान्धकारावृते ।
तन्निष्ठीवनपूतिगन्धभरिते भूपालबाह्याङ्कणे
वासक्लेशहराय कासरपते मन्नाय तुभ्यं नमः ॥ ८६ ॥
मूढा गाढधनोष्मभीमवदना क्ष्मापालपाशाद्धवे-
र्ष्याशापाशविकृष्यमाणहृदया व्यर्थां स्थितिन्तन्वते ।

अस्मद्भूपतिमाश्रयन्तु विबुधाः कामप्रदं सैरिभं यो
मानवति रचति चितिफलैस्साम्यस्समग्रैरपि ॥ ९७ ॥
उन्मत्ताद्रविणाधिकत्ववशतस्तं भङ्गता दुर्गुणै
स्सञ्जाताहमलेशतो विरचितान्यायाविभूत्याहताः।
केचिच्छृङ्गभृतश्च सम्प्रति सुभेदारादयः कासर
ज्येष्ठाः किं भवतो वदन्त्वमथवा सत्यं कनिष्ठाइमे ॥ ९८ ॥
केदारे महिषीमनोज्ञ ग्रहमाघ्रायोन्नमय्याननं
दन्तान् किञ्चिदभिप्रदर्श्य विकृतं कूजन् खुरैः क्ष्मां खनन्।
प्रत्यग्रायत सूरणाङ्कुरनिभन्तत्किञ्चिदुज्जृंभयन्
महिषेन्द्र निर्विशसि दुःक्ष्मापालवत् स्वश्रिया ॥ ९९ ॥
राजा धर्मपरः परस्परहृतस्नेहाश्च तन्मन्त्रिणो
राजन्वत्यवनीवतीपक जनास्त्वाढ्या भवन्तु क्रतौ।
पुष्टाङ्गाः पशवश्चरन्तु भजतां दुर्भिक्षवार्तालयं
वाञ्छानाथकवेः कृतिश्च कुरुतां निर्मत्सराणां मुदम् ॥१००॥

इति वाञ्छानाथकवीश्वरकृतं महिषशतकं सम्पूर्णम्।

———०———

राज्ञा तप्तोदकपक्वधान्यं इष्ट्वा किं हृदयस्फोट-
ङ्कृतावोहयः—इति पृष्टे अनेनैनैव कविना
पद्यमिदं भणित मित्याहुः। यथा—

उत्पत्तिः कमलये निवसतिः केदारभूमौ चिरं
किंचापापतया विशुध्य यपसि स्नुष्टं करैर्भास्वतः।

कुम्भीपाककृते दशापरिणतौ तत्सर्वमासीदिति
क्लेशेनैव महत्तरेण हृदयस्फोटङ्कृतात्रोहयः।

अनेनैव कविना स्वविरचितं पद्यं स्तुवता केनचित् रसिकेन दुर्भाषापूर्वकं श्राविते तदा पद्यमिदं भणितमित्याहुः। यथा—

अन्धीभूय गुणागुणेषु तरवीवातावधूताइव।
श्रावन्ते यदि साहितीं रसवतीमज्ञास्ततः किं फलं॥
जानन्वाग्रङ्गचमत्कृतीः पदगतीरर्थौचितीस्साहितीः।
रन्तश्शर्म यदश्नुते कविवरस्सा जीवनाडी कवेः॥ इति।

॥ समाप्तो महिषप्रबन्धः।

# श्रीपादारविन्दशतकम्॥

---

महिम्नः पन्थानं मदनपरिपन्थिप्रणयिनि
प्रभुर्निर्णेतुं ते भवति यतमानोपि कतमः।
तथापि श्रीकाञ्ची विहृति रसिकोपि मनसो
विपाकस्त्वत्पादस्तुतिविधिषु जल्पाकयति॥१॥

गलग्राही पौन्दरपुरवनीपल्लवरुचां
धृतप्राथम्यानामरुणमहसामादिमगुरुः।
समिन्धे बन्धूकस्तवकसहयोद्धा दिशि दिशि
प्रसर्पन् कामाक्ष्याश्चरणकिरणानामरुणिमा॥ २॥

मरालीनां यानाभ्यसनकलना मूलगुरवे
दरिद्राणां त्राणव्यतिकरसुरोद्यानतरवे।
तमस्काण्डप्रौढिप्रकटनतिरस्कारजनयं
कामाक्ष्याश्चरणनलिनाय स्पृहयते॥३॥

वहन्ती सैन्दूरीसरणिमवनम्रामरपुरी
पुरन्ध्रीसीमन्ते कविकमलबालार्कसुषमा।
त्रयी सीमन्तिन्यास्तनतटनिचोलारुणपटी
विभान्ती कामाक्ष्याः पदनलिनकान्तिर्विजयते॥४॥

प्रणम्रीभूतस्य प्रणयकलहत्रस्तमनस-
स्स्मरारातेश्चूडाव्रततिगृहमेधी हिमकरः।
ययोस्सान्ध्यां कान्तिं वहति सुषमाभिश्चरणयो
स्तयोर्मे कामाक्ष्याहृदयमपतन्द्रं विहरताम्॥५॥

यदोः पीठायन्ते विबुधमकुटीनां पटलिका
ययोर्सौधायन्ते स्वयमुदयभाजः फणितयः।
ययोर्दासायन्ते सरसिजभवाद्याश्चरणयोः
तयोर्मे कामाक्ष्या दिनमनु वरीवर्तु हृदयम् ॥६॥

नयन्तौ सङ्कोचं सरसिजरुचां दिक्परिसरे
सृजन्तौ लौहित्यं नखकिरणचन्द्रार्धखचिता।
कवीन्द्राणां हृत्कैरवविकसनोद्योगजननी
स्फुरन्ती कामाक्ष्याश्चरणरुचिसन्ध्या विजयते ॥७॥

विरावैर्माञ्जीरैः किमपि कथयन्तीव मधुरं
पुरस्तादानम्रे पुरविजयिनि स्मेरवदने।
वयस्येव प्रौढा शिथिलयति या प्रेमकलह-
प्ररोहं कामाक्ष्याश्चरणयुगली सा विजयते ॥८॥

सुपर्वस्त्रीलोलालकपरिचितं षट्पदचितैः
स्फुरल्लाक्षारागं तरुणतरणिज्योतिररुणैः।
भृतं कान्त्यम्भोभिर्विसृमरमरन्दैस्सरसिजैः
विधत्ते कामाक्ष्याश्चरणयुगलं बन्धुपदवीम् ॥९॥

रजस्संसर्गेऽपि स्थितमरजसामेव हृदये
परं रक्तत्वेन स्थितमपि विरक्तैकशरणाम्।
अलक्ष्यं मन्दानां वहदपि सदा मन्दगतितां
विधत्ते कामाक्ष्याश्चरणयुगमाश्चर्यलहरीम् ॥१०॥

जटाला मञ्जीरस्फुरदरुणरत्नांशुनिकरैः
निषीदन्ती मध्ये नखरुचिकरी गाङ्गपयसाम्।

परित्राणं कर्तुं मम जननि कामाक्षि नियतां
तपश्चर्यां धत्ते तव चरणपाथोजयुगली ॥११॥

तुलाकोटिद्वन्द्वक्वणितफणिता भीतिवचसोः
विनम्रं कामाक्षी विसृमरमहः पाटलितयोः ।
क्षणं विन्यासेन क्षपिततमसोर्मे ललितयोः
पुनीयान्मूर्धानं पुरहरपुरन्ध्रीचरणयोः ॥१२॥

भवानि द्रुह्येतां भवनिविड़ तेभ्यो मम मुहुः
तमोव्यामोहेभ्यस्तव जननि कामाक्षि चरणौ ।
ययोर्लाक्षाबिन्दुस्फुरणधरणाद्धूर्जटिजटा
कुटीरे शोणाङ्कं वहति वपुरेणाङ्ककलिका ॥१३॥

पवित्रीकुर्युर्नः पदतलभुवः पाटलरुचः
परागास्ते पापप्रशमनधुरीणास्तव शिवे ।
कणं लब्धुं येषां निजशिरसि कामाक्षिविवशा
वलन्तोव्यातन्वन्त्यहमहमिकां वासवमुखाः ॥१४॥

बलाकामालाभिर्नखरुचिमयीभिः परिवृते
विनम्रस्वर्नारी विकचकचकालाम्बुदकुले ।
स्फुरन्तःकामाक्षिस्फुटदलितबन्धूकसुहृद
स्तटिल्लेखायन्ते तव चरणपाथोजकिरणाः ॥१५॥

सरागस्सद्वेषः प्रसृमरसरोजे प्रतिदिनां
निसर्गादाक्रामन्विबुधजनमूर्धानमधिकम् ।
कथङ्कारं मातः कथय पादपद्मस्तव सताम्
नतानां कामाक्षि प्रकटयति कैवल्यसरणिम् ॥१६॥

जपालक्ष्मीशोणोजनितपरमज्ञाननलिनी
विकासव्यासङ्गोविफलितजगज्जाड्यगरिमा ।
मनः पूर्वाद्रिं मे तिलकयतु कामाक्षि तरसा
तमस्काण्डद्रोही तव चरणपाथोजरमणः ॥१७॥

नमस्कुर्मः प्रेङ्खन्मणिकटकनीलोपलमहः
पयोधौ रिङ्खद्भिर्नखकिरणफेनैर्धवलिते ।
स्फुटं कुर्वाणाय प्रवलचलदौर्वानलशिखा
वितर्कं कामाक्ष्यास्सततमरुणिम्ने चरणयोः ॥ १८॥

शिवे पाशायेतामलघुनि तमःकूपकुहरे
दिनाधीशायेतां मम हृदयोपाथोजविपिने ।
नमोमासायेतां सरसकवितारिति सरित्
त्वदीयौ कामाक्षि प्रसृतकिरणौ देवि चरणौ ॥ १९ ॥

निषक्तं श्रुत्यं ते नयनमिव सद्वृत्तरुचिरै
स्समैर्जुष्टं शुद्धैरधरमिव रम्यैर्द्विजगणैः ।
शिवे वक्षोजन्मद्वितयमिव मुक्ताश्रितमिमं
त्वदीयं कामाक्षि प्रणतशरणं नौमि चरणम् ॥२०॥

नमस्यासं सज्जन्नमुचि परिपन्थिप्रणयिनि
निसर्गप्रेङ्खोलत्कुरलकुलकालाहिशबले ।
नखच्छायादुग्धोदधिपयसि ते विद्रुमरुचां
प्रचारं कामाक्षि प्रचुरयति पादाब्जसुषमा ॥ २१ ॥

कदा दूरीकर्तुं कटुदुरितकाकोलजनितं
महान्तं सन्तापं मदनपरिपन्थिप्रियतमे ।

क्षणान्ते कामाक्षि त्रिभुवनपरीतापहरणे
पटीयांसं लप्स्ये पदकमलसेवामृतरसम् ॥ २२ ॥
ययोस्सान्ध्यं रोचिस्सततमरुणिम्ने स्पृहते
ययोश्चान्द्री कान्तिः परितपति दृष्ट्वा नखरुचिम् ।
ययोः पाकोद्रेकं पिपठिषति भक्त्या किसलय
म्रदिम्नः कामाक्ष्या मनसि चरणौ तौ तनुमहे ॥ २३॥
जगन्नेदन्नेदं परमिति परित्यज्य यतिभिः
कुशाग्रीयस्वान्तैः कुशलधिषणैश्शास्त्रसरणौ ।
गवेष्यं कामाक्षि ध्रुवमकृतकानां गिरिसुते
गिरामैदम्पर्यं तव चरणमाहात्म्यगरिमम ॥ २४ ॥
कृतस्नानं शास्त्रामृतसरसि कामाक्षि नितरा
न्दधानं वैशद्यं कलितरसमानन्दसुधया ।
अलङ्कारम्भूमेर्मुनिजनमनश्चिन्मयमहा
पयोधेरन्तस्स्थन्तव चरणरत्नं विजयते ॥ २५ ॥
मनोगेहे मोहोद्भवतिमिरपूर्णे मम मुहु-
र्दरिद्राणीकुर्वन् दिनकर सहस्राणि किरणैः ।
विधत्तां कामाक्षिप्रसृमरतमोवञ्चणचणाधं
सान्निध्यञ्चरणमणिदीपो जननि ते ॥ २६ ॥
बुधानाञ्चेतोवन्नखररुचि सम्पर्कि विबुध
स्रवन्ती स्रोतोवत्पटु मुखरितं हंसकरवैः ।
दिनारम्भश्रीवन्नियतमरुणच्छायसुभगं
मदन्तः कामाक्ष्या स्फुरतु पदपङ्केरुहयुगम् ॥ २७ ॥

सदा किं सम्पर्कात्प्रकृतिकठिनैर्वा किमकुटै-
स्तटैर्नीहाराद्रेरधिकमधुना योगिमनसाम्।
विभिन्ते सम्मोहं शिशिरयति भक्तानपि दृशा-
मदृश्यं कामाक्षि प्रकटयति ते पादयुगली ॥ २८ ॥
पवित्राभ्यामम्ब प्रकृतिमृदुलाभ्यान्तव शिवे
पदाभ्यां कामाक्षि प्रसभमभिभूतैश्चकितैः।
प्रवालैरम्भोजैरपि च वनवासव्रतदशा-
स्सदारभ्यन्ते परिचरितनानाद्विजगणैः ॥ २९ ॥
चिराद्दृश्या हंसैः कथमपि सदा हंससुलभा
निरस्यन्ती जाड्यं नियतजडमध्यैकशरणम्।
अदोषव्यासङ्गा सततमपि दोषाप्तिमलिनं
पयोजं कामाक्ष्याः परिहसति पादाब्जयुगली ॥ ३० ॥
सुराणामानन्दप्रबलनतया मण्डनतया
नखेन्दुज्योत्स्नाभिर्विसृमरतमः खण्डनतया।
पयोजश्रीद्वेषव्रततरया त्वच्चरणयो
र्विलासःकामाक्षि प्रकटयति नैशाकरदशाम् ॥ ३१ ॥
सितिम्ना कान्तीनां नखरजनुषां पादनलिन-
च्छवीनां शोणिम्ना तव जननि कामाक्षि नमने।
लभन्ते मन्दारग्रथितनवबन्धूककुसुम
स्रजां सामीचीन्यं सुरपुरन्ध्रीकचभराः ॥ ३२ ॥
स्फुरन्मध्ये शुद्धे नखकिरणदुग्धाब्धिपयसां
वहन्नब्जं चक्रं दरमपि च रेखात्मकतया।

श्रितोमास्त्रं रूपं श्रियमपि दधानो निरुपमां
त्रिधामा कामाक्ष्याः पदनलिननामा विजयते ॥ ३३ ॥

नखश्रीसंफुल्लस्तबकनिचितस्वैश्च किरणैः
पिशङ्गैः कामाक्षि प्रकटितलसत्पल्लवरुचिः।
सताङ्गम्यश्शङ्के सकलफलदातासुरतरु
स्त्वदीयः पादोयं तुहिनगिरिराजन्यतनये ॥ ३४ ॥

वषट्कुर्वन्माञ्जीरकलकलैः कर्मलहरी
हवींषि प्रोद्दण्डं ज्वलति परमज्ञानदहने।
महीयान् कामाक्षि स्फुटमहसि जोहोति सुधियां
मनोवेद्यां मातस्तव चरणयज्वागिरिसुते ॥३५॥

महामन्त्रं किञ्चिन्मणिकटकनादैरिव जपन्
क्षिपन् दिक्षु स्वच्छं नखरुचिमयं भास्मनरजः।
नतानां कामाक्षि प्रकृतिपटुरुच्चाटय ममता
पिशाचीम्पादोयं प्रकटयति ते मान्त्रिकदशाम् ॥ ३६ ॥

उदीते बोधेन्दौ तमसि नितरां जग्मुषिदशा-
न्दरिद्रां कामाक्षि प्रकटमनुरागञ्च दधती।
सितेनाच्छाद्याङ्गं नखरुचिमयेनांघ्रियुगली
पुरन्ध्री ते मातस्स्वयमभिसरत्येव हृदयम् ॥३७ ॥

दिनारम्भस्सम्पद्नलिनविपिनानामभिनवो
विकासो वा सन्तस्सुकविपिकलोकस्य नियतम्।
प्रदोषः कामाक्षि प्रकटपरमज्ञानशशिनः
चकास्ति त्वत्पादस्मरणमहिमा शैलतनये ॥ ३८ ॥

धृतच्छायासक्तं सरसिरुहमैत्रीपरिचितं
विधानं दीप्तीनां निखिलजगतां बोधजननम् ।
मुमुक्षूणां मार्गप्रथनपटु कामाक्षि पदवीं
पदन्ते पातङ्गीं परिकलयते पर्वतसुते ॥ ३९ ॥

अनैस्तीर्त्वा मोहाम्बुधिमथ समारोढुमनसः
क्रमात्कैवल्याख्यां सुकृतिसुलभां सौधवलभिम् ।
लभन्ते निःश्रेणीमिव झटिति कामाक्षि चरणं
पुरश्चर्याभिस्ते पुरमथनसीमन्तिनि जनाः ॥ ४० ॥

प्रचण्डार्तिक्षोभप्रथमसुहृदे प्रातिभसरि-
त्प्रवाहप्रोद्दण्डीकरणजलदाय प्रणमताम् ।
प्रदीपाय प्रौढे भवतमसि कामाक्षि चरणं
प्रसादौन्मुख्याय स्पृहयति जनोयं जननि ते ॥ ४१ ॥

मरुद्भिः संसेव्या सततमपि चाञ्चल्यरहिता
सदारुण्यं यान्ती परिणतिदरिद्राणसुषमा ।
गुणोत्कर्षान्माञ्जीरककलकलैस्तर्जनपरा
प्रवालं कामाक्ष्याः परिहसति पादाब्जयुगली ॥ ४२ ॥

जगद्रक्षादक्षा नलिनरुचिशिक्षापटुतरा
सुरैर्नम्या रम्या सततमपि गम्या बुधजनैः ।
द्वयी लीलालोला श्रुतिषु सुरपालादिमकुटी
तटीसीमाधामा जयति तव कामाक्षि पदयोः ॥ ४३ ॥

गिरां दूरौ चोरौ जडिमतिमिराणां कृतजग-
त्परित्राणौ शोणौ मुनिहृदयलीलैकनिपुणौ ।

नखस्मेरौ सारौ निगमवचसां खण्डितभव-
ग्रहोन्मादौ पादौ तव मनसि कामाक्षि कलये ॥ ४४ ॥
अविश्रान्तं पङ्कं यदपि कलयन् यावकमयं
निरस्यन् कामाक्षि प्रणमनजुषां पङ्कमखिलम् ।
तुलाकोटिद्वन्द्वं दधदपिच गच्छन्न तुलतां
गिरा मार्गं पादो गिरिवर सुते लङ्घयति ते ॥५५॥
प्रवालं सव्रीलं विपिनविवरे वेपयतिया
स्फुरल्लीलम्बालातपमधिकबाल्यं वदति या ।
रुचिं सान्ध्यां बन्ध्यां विरचयति या वर्धयतु सा
शिवं मे कामाक्ष्याः पदनलिनपाटल्यलहरी ॥ ४६ ॥
किरन् ज्योत्स्नारीतिं नखमुखरुचा हंसमनसो
वितन्वानः प्रीतिं विकचदरुणाम्भोरुहरुचिः ।
प्रकाशश्रीः पादस्तव जननि कामाक्षि तनुते
शरत्कालप्रौढिं शशिशकलचूड़ प्रियतमे ॥ ४७ ॥
नखाङ्कूरस्मेरद्युतिविनतिगङ्गाम्भसिसुखं
कृतस्नानं शास्त्रामृतममलमास्वाद्य नियतम् ।
उदञ्चन्मञ्जीरस्फुरणमणिदीपैर्मम मनो
मनोज्ञे कामाक्ष्याश्चरणमणिहर्म्ये विहरताम् ॥ ४८ ॥
भवाम्भोधौ नौका जडिमविपिने पावकशिखा
अमर्त्येन्द्रादीनामधिमकुटमुत्तंसकलिकाम ।

जगत्तापे ज्योत्स्नामकृतकवचः पञ्जरपुटे
शुकस्त्रीं कामाक्ष्या मनसि कलये पादयुगलीं ॥ ४९ ॥

परात्मप्राकाम्यप्रतिफलनचञ्चुः प्रणमतां
मनोज्ञस्त्वत्पादोमणिमुकुरमुद्राङ्कलयते ।
यदीयां कामाक्षि प्रकृतिमस्रणाम्शोधनदशां
विधातुञ्चेष्टन्ते बलरिपुबधूटीकचभराः ॥ ५० ॥

अविश्रान्तं तिष्ठन्नकृतकवचः कन्दरपुटी
कुटीरान्तः प्रौढां नखरुचिसटालिं प्रकटयन् ।
प्रचण्डं खण्डत्वं नयतु मम कामाक्षि तरसा
तमोवेतण्डेन्द्रं तव चरणकण्ठीरवपतिः ॥ ५१ ॥

पुरस्तात् कामाक्षि प्रचुररसमाखण्डलपुरी
पुरन्ध्रीणां लास्यन्तव ललितमालोक्य शनकैः ।
नखश्रीभिस्मेराइव वितनुते नूपुररवैः
चमत्कृत्याशङ्कं चरणयुगलीसाररचनाम् ॥ ५२ ॥

सरोजं निन्दन्ती नखकिरणकर्पूरशिशिरा
निषिक्ता मारारेर्मुकुटशशिरेखा हिमजलैः ।
स्फुरन्ती कामाक्षि स्फुटरुचिमये पल्लवचये
न वा दत्ते मैत्रं पथिकसुदृशा पादयुगली ॥ ५३ ॥

नतानां सम्पत्तेरनवरतमाकर्षणजपः
प्ररोहत्संसारप्रसरगरिमस्तम्भनजपः ।
त्वदीयः कामाक्षि स्मरहरमनोमोहनजपः
पटीयान्नः पायात्पदनलिनमञ्जीरनिनदः ॥५४ ॥

वितन्वीथानाथे मम शिरसि कामाक्षि कृपया
पदाम्भोजन्यासम्पशुपरिवृढप्राणदयिते ।
पिबन्तोयन्मुद्राप्रकरमुपकम्पापरिसरे
दृशा नानन्द्यन्ते नलिनभवनारायणमुखाः ॥ ५५ ॥

प्रणामोद्यद्वृन्दारकमुकुटमन्दारकलिका
विलोलल्लोलम्बप्रकरमयधूमप्रचुरिमा ।
प्रदीप्तः पादाब्जद्युतिविततिपाटल्यलहरी
कृशानुः कामाक्ष्या मम दहतु संसारविपिनम् ॥ ५६ ॥

वलक्षश्रीऋक्षाधिपरुचिसदृक्षा तव नखै-
र्जिहीतुर्दक्षत्वं सरसिरुहभित्तुल्यकरणि ।
क्षणान्नः कामाक्षि क्षुभितभवसंक्षोभगरिमा-
वचोवैचक्षण्यं चरणयुगलीपक्ष्मलयताम् ॥ ५७ ॥

समन्तात्कामाक्षि क्षततिमिरसन्तानसुभगा-
ननन्ताभिर्भाभिर्दिनमनुदिगन्तान्विरचयन् ।
अहन्ताया हन्ता मम जडिमदन्तावलहरि-
र्विभिन्तां सन्तापं तव चरणचिन्तामणिरसौ ॥ ५८ ॥

दधानो भास्वत्ताममृतनिलयोलोहितवपु-
र्विनम्राणां सौम्योगुरुरपि कवित्वं च कलयन् ।
गतौ मन्दोगङ्गाधरमहिषि कामाक्षि भजतां
तमःकेतुर्मातस्तव चरणपद्मोविजयते ॥ ५९ ॥

नयन्तीं दासत्वं नलिनभवमुख्यानसुलभ
प्रदादीनानाममरतरुदौर्भाग्यजननीं ।

जगज्जन्मक्षेमक्षयविधिषु कामाक्षि पदयो-
र्धुरीणामीष्टे कस्तव भणितुमाहोपुरुषिकाम् ॥ ६० ॥

जनोयं सन्तप्तो जननि भवचण्डांशुनिकरै:
अलब्ध्वाकिं त्वेकं कणमपि परज्ञानपयसः ।
तमोमार्गे पान्थस्तव झटिति कामाक्षि शिशिरां
पदाम्भोजच्छायां परमशिवजाये मृगयते ॥ ६१॥

जयत्यम्ब श्रीमन्नखकिरणचीनांशुकमयं
वितानम्बिभ्राणे सुरमुकुटसङ्घट्टमसृणे ।
निजारुण्यक्षौमास्तरणवति कामाक्षि सुलभा
बुधैस्संविन्नारी तव चरणमाणिक्यभवने ॥ ६२ ॥

प्रतीमः कामाक्षि स्फुरित तरुणादित्यकिरणां
श्रियोमूलद्रव्यन्तव चरणमद्रीन्द्रतनये ।
सुरेन्द्राशामापूरयति यदसौ ध्वान्तमखिलं
धुनीते दिग्भागानपि च महसा पाटलयते ॥ ६३ ॥

महाभाष्यव्याख्यापटुशयनमारोपयति वा
द्विरेफाणामध्यासयति सततं वा निवसतिं ।
स्मरव्यापारेर्ष्यापिशुननिटिलङ्कारयति वा
प्रणम्रं कामाक्ष्याः पदनलिनमाहात्म्यगरिमा ॥ ६४ ॥

विवेकाम्भस्स्रोतस्स्नपनपरिपाटी शिशिरिते
समीभूते शास्त्रस्मरणहलसङ्घर्षणवशात् ।
सतां चेतःक्षेत्रे वपति तव कामाक्षि चरणौ
महासंवित्सस्यप्रकरनवबीजङ्गिरिसुते ॥ ६५ ॥

दधानो मन्दारस्तवकपरिपाटीं नखरुचा
वहन् दीप्ताशोणाङ्गुलिपटलचाम्पेयकलिकाः।
अशोकोल्लासं नः प्रचुरयतु कामाक्षि चरणौ
विकासी वासन्तस्समयइव ते शर्वदयिते ॥ ६६ ॥

नखांशुप्राचुर्यप्रसृमरमरालालिधवल-
स्फुरन्मञ्जीरोद्यन्मरकतमहश्शैवलयुतः।
भवत्याः कामाक्षि स्फुटचरणपाटल्यकपटो
नदः शोणाभिख्यो नगपतितनूजे विजयते ॥ ६७ ॥

धुनानं पङ्कौघं परमसुलभं कण्टककुलैः
विकासव्यासङ्गं विदधदपराधीनमनिशं।
नखेन्दुज्योत्स्नाभिर्विशदरुचि कामाक्षि नितरां
असामान्यं मन्ये सरसिजमिदन्ते पदयुगम् ॥ ६८ ॥

करीन्द्राणां शुण्डान्यलसगतिलीलासुविमलैः
पयोजैर्मात्सर्यं प्रकटयति कामं कलयते।
पदाम्भोजद्वन्द्वन्तव तदपि कामाक्षि हृदयं
मुनीनां शान्तानां कथमनिशमस्मै स्पृहयते ॥ ३९ ॥

निरस्ता शोणिम्ना चरणकिरणानां तव शिवे
समिन्धाना सन्ध्यारुचिरचलराजन्यतनये।
असामर्थ्यादेनं परिभवितुमेतत्समरुचां
सरोजानां जाने मुकुलयति शोभां प्रतिदिनम् ॥ ७० ॥

उपादिक्षद्दाक्ष्यं तव चरणनामागुरुरसौ
मरालानां शङ्के मसृणगतिलालित्यसरणौ।

अतस्ते निस्तन्द्रं नियतममुना सख्यपदवीं
प्रपन्नं पाथोजं प्रतिदधति कामाक्षि कुतुकम् ॥ ७१ ॥
दधानैस्सम्पर्कं प्रकृतिमलिनैः षट्पदकुलैः
द्विजाधीशश्लाघा विधिषु विदधद्भिर्मुकुलताम्
रजोमिश्रैः पद्मैर्नियतमपि कामाक्षि पदयोः
विरोधस्ते युक्तो विषमशरवैरिप्रियतमे ॥ ७२ ॥
कवित्वश्रीमिश्रीकरणनिपुणौ रक्षणचणौ
विपन्नानां श्रीमन्नलिनमसृणौ शोणकिरणौ ।
मुनीन्द्राणामन्तःकरणसरणौ नर्तनचणौ
मनोज्ञौ कामाक्ष्या दुरितहरणौ नौमि चरणौ ॥ ७३ ॥
परस्मात्सर्वस्मादपि च परयोर्मुक्तिकरयोः
नखश्रीभिर्ज्योत्स्नाकलिततुलयोस्ताम्रतलयोः ।
विलीये कामाक्ष्या निगमनुतयोर्नाकिनतयो-
र्निरस्तप्रोन्मीलन्नलिनमदयोरेव पदयोः ॥ ७४ ॥
स्वभावादन्योन्यं किसलयमपीदं तव पदं
म्रदिम्ना शोणिम्ना भगवति दधाने सदृशताम् ।
वने पूर्वस्येच्छा सततमवने किन्तु जगतां
परस्येत्थं भेदस्स्फुरति हृदि कामाक्षि सुधियाम् ॥ ७५ ॥
कथं वाचालोऽपि प्रकटमणिमञ्जीरनिनदैः
सदैवानन्दार्द्रान् विरचयति वाचंयमजनान् ।
प्रकृत्या ते शोणच्छविरपि च कामाक्षि चरणो
मनीषानैर्मल्यं कथमिव नृणां मांसलयते ॥ ७६ ॥

चलत्तृष्णा वीची परिचलनपर्याकुलतया
मुहुर्भ्रान्त्यातान्तः परमशिव वामाक्षि परवान् ।
तितीर्षुः कामाक्षि प्रचुरतरकर्माम्बुधि ममुं
कदाहं लप्स्येते चरणमणिसेतुं गिरिसुते ॥ ७७ ॥
विशुष्यन्त्यां प्रज्ञासरिति दुरितग्रीष्मसमय-
प्रभावे न क्षीणे सति मम मनः केकिनि शुचा ।
त्वदीयः कामाक्षि स्फुरितचरणाम्भोजमहिमा
नभोमासाटो पन्नगपतिसुते किं न कुरुते ॥ ७८ ॥
विनम्राणाञ्चेतोभवनवलभीसीम्नि चरण-
प्रदीपे प्राकाश्यं दधति तव निर्धूततमसि ।
असीमा कामाक्षि स्वयमलघुदुष्कर्मलहरी
विघूर्णन्ती शान्तिंशलभपरिपाटीव भजते ॥ ७९ ॥
विराजन्ती शुक्तिर्नखकिरणमुक्तामणितते-
र्विपत्याथोराशौ तरणिरमराणां प्रणमताम् ।
त्वदीयः कामाक्षि ध्रुवमलघुदावीभववने
मुनीनां ज्ञानाग्नेररणिरयमङ्घ्रिर्विजयते ॥ ८० ॥
समस्तैस्संसेव्यस्सततमपि कामाक्षि विबुधै-
स्स्तुतोगन्धर्वस्त्रीसुललितविपञ्चीकलरवैः ।
भवत्या भिन्दानो भवगिरिकुलं जृम्भिततमो
बलद्रोही मातश्चरणपुरुहूतोविजयते ॥ ८१ ॥
वसन्तं भक्तानामपि मनसि नित्यं परिलसत्
घनच्छायापूर्णं शुचिमपि नृणां तापशमनम् ।

नखेन्दुज्योत्स्नाभिः शिशिरमपि पद्मोदयकरं
नमामः कामाक्ष्याश्चरणमधिकाश्चर्यकरणम् ॥ ८२ ॥
कवीन्द्राणां नानाफणितिगुणचित्रीकृतवचः
प्रपञ्चव्यापारप्रकटकलाकौशलनिधिः।
अधः कुर्वन्नब्जं सनकभृगुमुख्यैर्मुनिजनै-
र्नमस्यः कामाक्ष्याश्चरणपरमेष्ठी विजयते ॥ ८३ ॥
भवत्याः कामाक्षि स्फुरितपदपङ्केरुहभुवां
परागाणां पूरैः परिहृतकलङ्कव्यतिकरैः।
नतानामामृष्टे हृदयमुकुरे निर्मलरुचि
प्रसन्ने निश्शेषं प्रतिफलति विश्वं गिरिसुते ॥ ८४ ॥
तव त्रस्तं पादात्किसलयमरण्यान्तरमगात्
परं रेखारूपं कमलममुमेवाश्रितमभूत् ॥
जितानां कामाक्षि द्वितयमपि युक्तं परिभवे
विदेशे वासो वा शरणगमनं वा निजरिपोः ॥ ८५ ॥
गृहीत्वा याथार्थ्यं निगमवचसां देशिककृपा
कटाक्षार्कज्योतिः शमितममताबन्धतमसः ॥
यतन्ते कामाक्षि प्रतिदिवसमन्तर्द्रढयितुं
त्वदीयं पादाब्जं सुकृतपरिपाकेन सुजनाः ॥ ८६ ॥
जडानामप्यम्ब स्मरणसमये त्वच्चरणयोः
भ्रमन्मन्थक्ष्माभृद् घुमघुमितसिन्धुप्रतिभटाः ॥
प्रसन्नाः कामाक्षि प्रसभमधरस्पंदनकरा
भवन्ति स्वच्छन्दं प्रकृतिपरिपक्वा भणितयः ॥ ८७ ॥

बहन्नप्यश्रान्तं मधुरनिनदं हंसकमसौ
तमेवाधःकर्तुं किमिव यतते केलिगमने ।
भवस्यैवानन्दं विदधदपि कामाक्षि चरणो
भवत्यास्तद्द्रोहं भगवति किमेवं वितनुते ॥ ८८ ॥

यदत्यन्तं ताम्यत्यलसगतिलोलास्वपि शिवे
तदेतत्कामाक्षि प्रकृतिमृदुलं ते पदयुगम् ।
किरीटं सङ्घट्टं कथमिव सुरौघस्य सहते
मुनीन्द्राणामन्तर्मनसि च कथं सूचिनिशिते ॥ ८९ ॥

मनोरङ्गे मत्के विबुधजनसम्मोदजननी
सरागव्यासङ्गा सरसमृदुसञ्चारसुभगा ।
मनोज्ञा कामाक्षि प्रकटयतु लास्यप्रकरणां
रणन्मञ्जीराते चरणयुगली नर्तकवधूः ॥ ९० ॥

परिष्कुर्वन्मातः पशुपतिकपर्दं च विषये
पराचां हृत्पद्मं परमफणितीनाञ्च मकुटीम् ।
परस्ते पादोयं परिहरतु कामाक्षि ममता
पराधीनत्वं मे परिमुषितपाथोजमहिमा ॥ ९१ ॥

प्रसूनैस्सम्पर्कादमरतरुणीकुन्तलभवैः
अभीष्टानां दानादनिशमपि कामाक्षि नमताम् ।
स्वसङ्गात् त्वं केलिप्रसवजनकत्वेन च तव
त्रिधा धत्ते वार्तां सुरभिरिति पादो गिरिसुते ॥ ९२ ॥

महामोहस्तेन व्यतिकरभयात्पालयति यो
विनिक्षिप्तं स्वस्मिन् मुनिजनमनोरत्नमनिशं ।

सरागस्योद्रेकात्सततमपि कामाक्षि तरसा
किमेवं पादोसौ किसलयरुचिं चोरयति ते ॥ ९३ ॥
सदा स्वादुङ्कारं विषयलहरी शालिकणिकां
समास्वाद्य श्रान्तं हृदयशुकपोतं जननि मे ।
कृपाजाले फालेक्षणरमणि कामाक्षि रभसात्
गृहीत्वा बध्नीयाश्चरणयुगली पञ्जरपुटे ॥ ९४ ॥
धुनानं कामाक्षि स्मरणलवमात्रेण जडिम
ज्वरप्रौढिं गूढं निगमशिखरे कुञ्जकुहरे ।
अलभ्यं मन्दानां कति च न लभन्ते सुकृतिनः
चिरादन्विष्यन्तस्तव चरणसिद्धौषधमिदम् ॥ ९५ ॥
रणन्मञ्जीराभ्यां ललितगमनाभ्यां सुकृतिनां
मनोवास्तव्याभ्यां मथिततिमिराभ्यां नखरुचा ।
निधेयाभ्यां पत्या निजशिरसि कामाक्षि सततं
नमस्ते पादाभ्यां नलिनमृदुलाभ्यां नगसुते ॥ ९६ ॥
सुराणि राकेन्दुप्रतिनिधिमुखे पर्वतसुते
चिराल्लभ्ये शमधनजनानां परिषदा ।
मनोभृङ्गोमत्कः पदकमलयुग्मे जननि ते
प्रकामं कामाक्षि त्रिपुरहर वामाक्षि रमतां ॥ ९७ ॥
यशस्ते मातर्मधुरकवितां पल्लवयते
श्रियं दत्ते चित्ते किमपि परिपाकं प्रथयते ।
सतां पाशग्रन्थिं शिथिलयति किं किन्न कुरुते
प्रसन्ना कामाक्षि प्रणतिपरिपाटी चरणयोः ॥ ९८ ॥

पदद्वंद्वं मन्दं गतिषु निवसन्तं हृदि सतां
गिरामन्ते भ्रान्तं कृतकरहितानां परिवृढे ।
जनानामानन्दं जननि जनयन्तं प्रणमतां
त्वदीयं कामाक्षि प्रतिदिनमहं नौमि विमलं ॥ ९९ ॥
पुरामारारातिः पुरमजयदम्ब स्तवशतैः
प्रसन्नायां सत्यां त्वयि तुहिनशैलेन्द्रतनये ।
अतस्ते कामाक्षि स्फुरतु तरसा कालसमये
समायाते मातर्मम मनसि पद्माब्जयुगलो ॥ १०० ॥
अलङ्काले काले विपदि तव कामाक्षि चरणं
दिनारम्भोद्यत्तपनजलजन्मद्युतिभरं ।
सकृत्स्मृत्वालोकास्सुरवरघटाभिर्मुहुरिमे
निषेव्यन्ते वन्दे जननरहितायं तममलम् ॥ १०१ ॥

॥ इति श्रीकामाक्षिपादारविन्दशतकम् ॥

॥ समाप्तम् ॥

## ॥ कटाक्षशतकम् ॥

॥ ४ ॥

मोहान्धकारनिवहं विनिहन्तुमीडे
मूकात्मनामपि महाकवितावदान्यान् ॥
श्रीकाञ्चिदेशशिशिरीकृति जागरूका
नेकाम्रनाथतरुणी करुणाविलोकान् ॥ १ ॥

मातर्जयन्ति ममता ग्रहमोक्षणानि
माहेन्द्रनीलरुचिशिक्षणदक्षिणानि ॥
कामाक्षि कल्पितजगत्त्रयरक्षणानि
त्वद्वीक्षणानि वरदानविचक्षणानि ॥ २ ॥

आनङ्गतन्त्रविधिदर्शितकौशलाना-
मानन्दमन्दपरिघूर्णितमन्थराणां ॥
तारुण्यमम्ब तव ताडित कर्णसीम्नां
कामाक्षि खेलति कटाक्षनिरीक्षणानां ॥ ३ ॥

कल्लोलितेन करुणारसवेल्लितेन
कल्माषितेन कमनीय मृदुस्मितेन ॥
मामञ्चितेन तव किञ्चन कुञ्चितेन
कामाक्षि तेन शिशिरीकुरु वीक्षितेन ॥ ४ ॥

साहाय्यकं गतवती मुहुरर्जुनस्य
मन्दस्मितेन परितोषितभीमचेताः ॥
कामाक्षि पाण्डवचमूरिव तावकीना ॥
कर्णान्तिकस्खलति हन्तु कटाक्षलक्ष्मीः ॥ ५ ॥
अस्तं क्षणान्नियतु मे परितापसूर्य-
मानन्दचन्द्रमसमानयतां प्रकाशं ॥
कालान्धकारसुषमाङ्कलत न्दिगन्ते
कामाक्षि कोमलकठाक्षनिशागमस्ते ॥ ६ ॥
ताटङ्कमौक्तिकरुगङ्कुरदन्तकान्तिः
कारुण्यहस्तिपशिखामणिनाधिरूढ़ः ॥
उन्मूलयत्वशुभपादपमस्मदीय्यं
कामाक्षि तावककटाक्षमतङ्गजेन्द्रः ॥ ७ ॥
छायाभरेण जगतां परितापहारी
ताटङ्करत्नमणितल्लजपल्लवश्रीः ।
कारुण्यनामविकिरन्मकरन्दजालं
कामाक्षि राजति कटाक्षसुरद्रुमस्ते ॥ ८ ॥
सूर्याश्रयप्रणयिनी मणिकुण्डलांशु-
लौहित्यकोकनदकाननमानिनाय ।
यान्ती तव स्मरहराननकान्ति सिन्धुं
कामाक्षि राजति कटाक्षकलिन्दकन्या ॥ ९ ॥
प्राप्नोति यं सुकृतिनं तव पक्षपातात्
कामाक्षि वीक्षणविलासकला पुरन्ध्री ।

सद्यस्तमेव किल मुक्तिवधूर्वृणीते
तस्मान्नितान्तमनयोरिदमैकमत्यम् ॥ १० ॥

यान्ती सदैव मरुतामनुकूलभावं
भ्रूवल्लिशक्रधनुरुल्लसिता रसार्द्रा ।
कामाक्षि कौतुकतरङ्गितनीलकण्ठा
कादम्बिनीव तव भाति कटाक्षमाला ॥ ११ ॥

गङ्गाम्भसि स्मितमये तपनात्मजेव
गङ्गाधरोरसि नवोत्पलमालिकेव ।
वक्त्रप्रभा सरसि शैवलमण्डलीव
कामाक्षि राजति कटाक्षरुचिच्छटा ते ॥ १२ ॥

संस्कारतः किमपि कन्दलितान्रसज्ञान्
केदारसीम्नि सुधियामुपभोगयोग्यान् ।
कल्याणसूक्तिलहरी कलमाङ्कुरान्नः
कामाक्षि पक्ष्मलयतु त्वदपाङ्गपातः ॥ १३ ॥

चाञ्चल्यमेव कलयन्नियतं प्रकृत्या
मालिन्यभूश्रुतिपथाक्रमजागरूकः ।
कैवल्यमेव किमु कल्पयते नतानां
कामाक्षि चित्रमयते करुणाकटाक्षः ॥ १४ ॥

सञ्जीवने जननि चूतशिलीमुखस्य
सम्मोहने शशिकिशोरकशेखरस्य ।
संस्तम्भने च ममताग्रहचेष्टितस्य
कामाक्षि वीक्षणकला परमौषधन्ते ॥ १५ ॥

कामद्रुहो हृदययन्त्रणजागरूका
कामाक्षि चञ्चलदृगञ्चलमेखला ते।
आश्चर्यमम्ब भजतां झटिति स्वकीय-
सम्पर्क एव विधुनोति समस्तबन्धान्॥ १६॥
नीलोऽपि रागमधिकं जनयन् पुरारेः
लोलोऽपि भक्तिमधिकां दृढयन्नराणाम्।
वक्रोऽपि देवि नमतां समतां वितन्वन्
कामाक्षि नृत्यतु मयि त्वदपाङ्गपातः॥ १७॥
कुण्ठीकरोतु विपदं मम कुञ्चितभ्रू
चापाञ्चितश्रितविदेहभवानुरागः।
रक्षापकारमनिशं जनयन् जगत्यां
कामाक्षि राम इव ते करुणाकटाक्षः॥ १८॥
श्रीकामकोटि शिवलोचनशोषितस्य
शृङ्गारबीजविभवस्य पुनः प्ररोहे।
प्रेमाम्भसार्द्रमचिरात् प्रचुरेण शङ्के
केदारमम्ब तव केवलदृष्टिपातः॥ १९॥
माहात्म्यशेवधिरसौ तव दुर्विलङ्घ्य
संसारविन्ध्यगिरिखण्डनकेलिचञ्चुः।
धैर्याम्बुधिं पशुपतेश्चुलुकीकरोति
कामाक्षि वीक्षणविजृम्भणकुम्भजन्मा॥ २०॥
पीयूषवर्षशिशिरा स्फुटदुत्पलश्री
मैत्रीविसर्गमधुराश्रिततारकासिः।

कामाक्षि संश्रितवती वपुरष्टमूर्त्ते-
[र्वीरुधायते] भगवति त्वदपाङ्गमाला ॥ २१ ॥

अम्ब स्मर प्रतिभटस्य वपुर्मनोज्ञ-
मम्भोजकाननमिवाञ्चितकण्टकाभं ।
भृङ्गीव चुम्बति सदैव सपक्षपाता
कामाक्षि कोमलरुचिस्त्वदपाङ्गमाला ॥ २२ ॥

केशप्रभापटलनीलवितानजाले
कामाक्षि कुण्डलमणिच्छविदीपशोभे ।
कम्रे कटाक्षरुचिरङ्गतले कृपाख्या
शैलूषिका नटति शङ्करवल्लभे ते ॥ २३ ॥

अत्यन्तशीतलमतन्द्रयतु क्षणार्ध-
मस्तोकविभ्रममनङ्गविलासकन्दम् ।
अल्पस्मितामृतमपारकृपाप्रवाह-
मक्षिप्ररोहमचिरान्मयि कामकोटी ॥ २४ ॥

मन्दाक्षरागतरलीकृतिपारतन्त्र्यां
कामाक्षि मन्थरतरां त्वदपाङ्गडोलां ।
आरुह्य मन्दगतिकौतुकशालि चक्षु-
रानन्दमेति मुहुरर्धशशाङ्कमौलेः ॥ २५ ॥

त्रैयम्बकत्रिपुरसुन्दरि हर्म्यभूमि-
रङ्गं विहारसरसी करुणाप्रवाहः ।
दासाश्च वासवमुखाः परिपालनीयाः
कामाक्षि विश्वमपि वीक्षणभूभृतस्ते ॥ २६ ॥

वागीश्वरी सहचरी नियमेन लक्ष्मी
भ्रूवल्लरी वशकरी भुवनानि गेहं ।
रूपन्त्रिलोकनयनामृतमम्ब तेषां
कामाक्षि येषु तव वीक्षणपारतन्त्र्यं ॥ २७ ॥
माहेश्वरं झटिति मानसमीनमम्ब-
कामाक्षि धैर्यजलधौ नितरान्निमग्नं ।
जालेन शृङ्खलयति त्वदपाङ्गनाम्ना
विस्तारितेन कुसुमायुधदाशकोऽसौ ॥ २८ ॥
उन्मूल्य बोधकमलाकरमम्ब जाड्य
स्तम्बेरमं मम मनो विपिने भ्रमन्तम् ।
कुण्ठीकुरुष्व तरसा कुटिलाग्रसीम्ना
कामाक्षि तावककटाक्षमहाङ्कुशेन ॥ २९ ॥
उद्वेल्लितस्तवकितैर्ललितैर्विलासै-
रुत्थाय देवि तव गाढकटाक्षकुञ्जात् ।
दूरम्पलाययतु मोहमृगीकुलं मे
कामाक्षि सत्वरमनुग्रहकेसरीन्द्रः ॥ ३० ॥
स्नेहार्द्रितां विकसितोत्पलकान्तिचोरा-
ञ्जेतारमेव जगदीश्वरि जेतुकामः ।
मानोद्धतो मकरकेतुरसौ धुनीते
कामाक्षि तावककटाक्षकृपाणवल्लीं ॥ ३१ ॥
श्रौतीं व्रजन्त्यपि सदा रथ्यां मुनीनां
कामाक्षि सन्ततमपि स्मृतिमार्गगामी ।

कौटिल्यमम्ब कथमस्थिरताञ्च धत्ते
चौर्यञ्च पङ्कजरुचान्त्वदपाङ्गलेशः ॥ ३२ ॥

नित्याश्रितैः परिचितौ यतमानमेव
नीलोत्पलं निजसमीपनिवासलोलं ।
प्रीत्यैव पाठयति वीक्षणदेशिकेन्द्रः
कामाक्षि किन्तु तव कालिमसम्प्रदायं ॥ ३३ ॥

भ्रान्त्या मुहुस्तरकितस्मितफेनराशौ
कामाक्षि वक्त्ररुचिसञ्चयवारिराशौ ।
आनन्दति त्रिपुरमर्दननेत्रलक्ष्मी-
रालम्ब्य देवि तव मन्दमपाङ्गसेतुं ॥ ३४ ॥

श्यामा तव त्रिपुरसुन्दरि लोचनश्रीः
कामाक्षि कन्दलितमेदुरतारकान्तिः ।
ज्योत्स्नावतौ स्मितरुचापि कथन्तनोति
स्पर्धां महो कुवलयैश्च तथा चकोरैः ॥ ३५ ॥

कालाञ्जनञ्च तव देवि निरीक्षणञ्च
कामाक्ष्यसाम्यसरणिं समुपैति कान्त्या ।
निःशेषनेत्रसुलभं जगतीषु पूर्व-
मन्यत्त्रिनेत्रसुलभन्तुहिनाद्रिकन्ये ॥ ३६ ॥

धूमाङ्कुरो मदनकेतनपावकस्य
कामाक्षि नेत्ररुचिनीलिमचातुरी ते ।
अत्यन्तमद्भुतमिदन्नयनत्रयस्य
हर्षोदयं जनयते हरिणाङ्कमौलेः ॥ ३७ ॥

आरम्भलेशसमये तव वीक्षणस्य
कामाक्षि मूकमपि वा क्षणमाननम्ब ।
सर्वज्ञतासकललोकसमक्ष मेव
कीर्त्तिं श्रयम्बरणमाल्यवती वृणीते ॥ ३८ ॥
कालाम्बुवाहइव ते परितापहारी
कामाक्षि पुष्करमधः कुरुते कटाक्षः ।
पूर्वः परं क्षणरुचा समुपैति मैत्री
मन्यस्तु सन्ततरुचिम्प्रकटीकरोति ॥ ३९ ॥
सूक्ष्मेऽपि दुर्गमतरेऽपि गुरुप्रसाद-
साहाय्यकेन विचरन्नपवर्गमार्गे ।
संसारपङ्कनिचयेन पतत्यमुन्ते
कामाक्षि गाढमवलम्बय कटाक्षयष्टिं ॥ ४० ॥
कामाक्षि सन्ततमसौ हरिनीलरत्न-
स्तम्भे कटाक्षरुचिपुञ्जमये भवत्याः ।
बद्धोऽपि भक्ति निगलैर्मम चित्तहस्ती
स्तम्भञ्च बन्धमपि मुञ्चति हन्त चित्रं ॥ ४१ ॥
कामाक्षि काणमपि सन्ततमञ्जनञ्च
बिभ्रन्निसर्गतरलोऽपि भवत्कटाक्षः ।
नैर्मल्यमन्वहमनञ्जनताञ्चभूय
स्थैर्यञ्च भक्तहृदयाय कथन्ददाति ॥ ४२ ॥
मन्दस्मितस्तवकितम्मणिकुण्डलांशु
स्तोमप्रवालरुचिरं शिशिरीकृताशं ।

कामाक्षि राजति कटाक्षरुचीकदम्ब-
मुद्यानमम्ब करुणा हरिणेक्षणायाः ॥ ४३ ॥

कामाक्षि तावककटाक्षमहेन्द्रनील
सिंहासनं श्रितवतो मकरध्वजस्य ।
साम्राज्यमङ्गलविधौ मणिकुण्डलश्री
नीराजनोत्सवतरङ्गितदीपमाला ॥ ४४ ॥

मातः क्षणं स्नपय मां तव वीक्षितेन
मन्दाक्षि तेन सुजनैरपरीक्षितेन ।
कामाक्षि कर्मतिमिरोत्करभास्करेण
श्रेयस्करेण मधुपद्युतितस्करेण ॥ ४५

प्रेमापगापयसि मज्जनमारचय्य
युक्तः सितांशुकलाभस्मविलेपनश्रीः ।
कामाक्षि कुण्डलमणिद्युतिभिर्जटाल-
श्रीकण्ठ एव भजते तव दृष्टिपातः ॥ ४६ ॥

कैवल्यदाय करुणारसकिङ्कराय
कामाक्षि कन्दलितविभ्रमशङ्कराय ।
आलोकनाय तव भक्तशिवङ्कराय
मातर्नमोस्तु परतन्त्रितशङ्कराय ॥ ४७ ॥

साम्राज्यमङ्गलविधौ मकरध्वजस्य
लोलालकालिकृततोरणमाल्ययोरे ।
कामेश्वरि प्रचुरमुत्पलवैजयन्ती
चातुर्यमेति तव चञ्चलदृष्टिपातः ॥ ४८ ॥

मार्गेण मञ्जुकचकान्तितमोवृतेन
मन्दायमानगमना मदनातुरासौ ।
कामाक्षि दृष्टिरयते तव शङ्कराय
सङ्केतभूमिरचिरादभिसारिकेव ॥ ४९ ॥

व्रीडाप्रवृत्तिरमणीकृतसाहचर्या
शैवालिताङ्गलरुचा शशिशेखरस्य ।
कामाक्षि कान्तिसरसि त्वदपाङ्गलक्ष्मी
र्मन्दं समाश्रयति मज्जनखेलनाय ॥ ५० ॥

काषायमंशुकमिव प्रकटं दधानो-
माणिक्यकुण्डलरुचिर्ममताविरोधी ।
श्रुत्यन्तसीमनिरतस्तु तरां त्वकास्ति
कामाक्षि तावककटाक्षयतीश्वरोऽसौ ॥ ५१ ॥

पाषाण एव हरिनीलमणिर्दिनेषु
प्रम्लानताङ्कुवलयम्प्रकटीकरोति ।
नैमित्तिकाजलदमेचकताततस्ते
कामाक्षि शून्यमवमानमपाङ्गलक्ष्म्याः ॥ ५२ ॥

शृङ्गारविभ्रमवती सुतरां सलज्जा
नासाग्रमौक्तिकरुचा कृतमन्दहासा ।
श्यामा कटाक्षसुषमा तव युक्तमेतत्
कामाक्षि चुम्बति दिगम्बरवक्त्रबिम्बं ॥ ५३ ॥

नीलोत्पलेन मधुपेन च दृष्टिपातः
कामाक्ष्यतुल्यमिति ते कथमामनन्ति ।

शैत्येन निन्दति यदन्वहमिन्दुपादान्
पाथोरुहेण यदसौ कलहायते च ॥ ५४ ॥

ओष्ठप्रभापटलविभ्रममुद्रितेन
भ्रूवल्लिवीचिसुभगे मुखकान्तिसिन्धौ ।
कामाक्षि वारिभरपूरणलम्बमान
कालाम्बुवाहसरणिं लभते कटाक्षः ॥ ५५ ॥

मन्दस्मितैर्धवलिता मणिकुण्डलांशु
सम्पर्कलोहितरुचिस्त्वदपाङ्गधारा ।
कामाक्षि मल्लिकुसुमैर्नवपल्लवैश्च ।
नीलोत्पलैश्च रचितेव विभाति माला ॥ ५६ ॥

कामाक्षि शीतलकृपारसनिर्झराभिः
सम्पर्कपक्ष्मलरुचिः त्वदपाङ्गमाला ।
गोभिः सदा पुररिपोरभिलष्यमाणा
दूर्वाकदम्बकविडम्बनमातनोति ॥ ५७ ।

हृत्पङ्कजं मम विकासयिता प्रमुष्ण-
न्नुल्लासमुत्पलरुचस्तमसां निरोद्धा ।
दोषानुषङ्गजड़ताञ्जगतान्धुनानः
कामाक्षि वीक्षणविलासमहोदयस्ते ॥ ५८ ॥

चक्षुर्विमोहयति चन्द्रविभूषणस्य
कामाक्षि तावककटाक्षतमःप्ररोहः ।
प्रत्यङ्मुखन्तु नयनं स्तिमितम्मुनीनां
प्राकाश्यमेव नयतीति परं विचित्रं ॥ ५९ ॥

कामाक्षि वीक्षणरुचा युधि निर्जितं ते
नीलोत्पलं निरवशेषगताभिमानं ।
आगत्य तत्परिसरं श्रवणावतंस
व्याजेन नूनमभयार्थनमातनोति ॥ ६० ॥
आश्चर्यमम्ब वदनाम्बुदयावलम्बं
कामाक्षि चञ्चलनिरीक्षणविभ्रमस्ते ।
धैर्यं विधूय तनुते हृदि रागबन्धं
शम्भोस्तदेव विपरीततया मुनीनाम् ॥ ६१ ॥
जन्तोरसकृत्प्रणमतो जगदीशितव्य
तेजस्विताञ्च निभृताञ्च मतिं सभायाम् ।
कामाक्षि माक्षिकझरीमिव वैखरीञ्च
लक्ष्मीञ्च पक्ष्मलयति क्षणवीक्षणन्ते ॥ ६२ ॥
कादम्बिनी किमयतेन जलानुषङ्गं
भृङ्गावलिः किमुररीकुरुते न पद्मम् ।
किं वा कलिन्दतनया सह तेन भङ्गं
कामाक्षि निश्चयपदं न तवाक्षिलक्ष्मीः ॥ ६३ ॥
काकोलपावकतृणीकरणेपि दक्षं
कामाक्षि बालकसुधाकरशेखरस्य ।
अत्यन्तशीतलतमोप्यनिवारितं ते
चित्तं विमोहयति चित्रमयं कटाक्षः ॥ ६४ ॥
कार्पण्यपूररसवर्धितमम्ब मोह-
कन्दोद्गतं भवमयं विषपादपं मे ।

तुङ्गं छिनत्तु तुहिनाद्रिसुते भवत्याः
काञ्चीपुरीश्वरि कटाक्षकुठारधारा ॥ ६५ ॥
कामाक्षि घोरभवरोगचिकित्सनार्थ-
मभ्यर्थ्य देशिककटाक्षभिषक्प्रसादात्।
तत्रापि देवि लभते सुकृती कदाचि-
दत्यन्तदुर्लभमपाङ्गमहौषधं ते ॥ ६६ ॥
कामाक्षि देशिककृपाङ्कुरमाश्रयन्तो
नानातपोनियमनाशितपाशबन्धाः।
वासालयं तव कटाक्षममुं महान्तं
लब्ध्वा सुखं समधियो विचरन्ति लोके ॥ ६७ ॥
साकूतसंलपितगर्भितमुग्धहासं
व्रीडानुरागसहचारि विलोचनं ते।
कामाक्षि कामपरिपन्थिनि मारवीर-
साम्राज्यविभ्रमदशां प्रकटीकरोति ॥ ६८ ॥
कामाक्षि विभ्रमबलैकनिधिर्विधाय
भ्रूवल्लिचापकुटिलीकृतिमेव चित्रम्।
स्वाधीनतां तव निनाय शशाङ्कमौले-
रङ्गार्धराज्यसुखलाभमपाङ्गवीरः ॥ ६९ ॥
कामाङ्कुरैकनिलयस्तव दृष्टिपातः
कामाक्षि भक्तमनसां प्रददातु कामान्।
रागान्वितः स्वयमपि प्रकटीकरोति
वैराग्यमेव कथमेष महामुनीनाम् ॥ ७० ॥

कालाम्बुवाहनिवहैः कलहायते ते
कामाक्षि कालिममदेन सदा कटाक्षः ।
चित्रं तथापि नितरामममुमेव दृष्ट्वा
सोत्कण्ठ एव रमते किल नीलकण्ठः ॥ ७१ ॥

कामाक्षि मन्मथरिपोरवलोकनेषु
कान्तं पयोजमिव तावकमक्षिपातम् ।
प्रेमागमो दिवसवद्विकचीकरोति
लज्जाभरो रजनिवन्मुकुलीकरोति ॥ ७२ ॥

मूकोविरञ्चति परं पुरुषः कुरूपः
कन्दर्पति त्रिदशराजति किम्पचानः ।
कामाक्षि केवलमुपक्रमकाल एव
लीलातरङ्गितकटाक्षरुचिः क्षणन्ते ॥ ७३ ॥

नीलालका मधुकरन्ति मनोज्ञनासा
मुक्तारुचः प्रकटकन्दबिसाङ्कुरन्ति ।
कारुण्यमम्ब मकरन्दति कामकोटि
मन्ये ततः कमलमेव विलोचनन्ते ॥ ७४ ॥

आकाङ्क्ष्यमाणफलदानविचक्षणायाः
कामाक्षि तावककटाक्षककामधेनोः ।
सम्पर्क एव कथयमम्ब विमुक्तपाश-
बन्धाः स्फुटन्तनुभृतः पशुतान्त्यजन्ति ॥ ७५ ॥

संसारघर्मपरिपाकजुषां नराणां
कामाक्षि शीतलतराणि तवेक्षणानि ।

सन्धुक्षयन्ति मुहुरिन्धनरागरीत्या
कामद्रुहो मनसि मन्मथचित्रभानुम् ॥ ७६ ॥

चन्द्रातपन्ति घनचन्दनकर्दमन्ति
मुक्तागुणन्ति हिमवारि निषेचनन्ति ।
प्रेमाम्बुराशि सततस्नपितानि चित्रं
कामाक्षि तावककटाक्षनिरीक्षणानि ॥ ७७ ॥

कालाञ्जनप्रतिभटं कमनीयकान्त्या
कन्दर्पतन्त्रकलया कलितानुभावम् ।
काञ्चीविहाररसिके कलुषार्तिचोरं
कल्लोलयस्व मयि ते करुणाकटाक्षम् ॥ ७८ ॥

कान्तेन मन्मथमदेन विमोह्यमान
स्वान्तेन चूततरुमूलगतस्य पुंसः ।
कान्तेन किञ्चिदवलोकय लोचनस्य
प्रान्तेन मां जननि काञ्चिपुरी विभूषे ॥ ७९ ॥

कामाक्षि केऽपि सुजनास्त्वदपाङ्गसङ्गे
कण्ठेन कन्दलितनीलिमसम्प्रदायाः ।
उत्तंसकल्पितकुटुम्बचकोरपोषा
नक्तन्दिनं प्रसवभूनयना भवन्ति ॥ ८० ॥

नीलोत्पलप्रसवकान्तिनिदर्शनेन
कारुण्यविभ्रमजुषा तव वीक्षणेन ।
कामाक्षि कर्मजलधेः कलशीसुतेन
पाशत्रयाद्वयममी परिमोचनीयाः ॥ ८१ ॥

अत्यन्तचञ्चलमलौकिकमञ्जनं किं
झङ्कारभङ्गिरहिता किमु भृङ्गमाला ।
धूमाङ्कुरः किमु हुताशनसङ्गहीनः
कामाक्षि नेत्ररुचिनीलिमकन्दली ते ॥ ८२ ॥

कामाक्षि नित्यमयमञ्जलिरस्तु मुक्ति-
बीजाय विभ्रममदोदयघूर्णिताय ।
कन्दर्पदर्पपुनरुद्भवसिद्धिदाय
कल्याणदाय तव देवि दृगञ्चलाय ॥ ८३ ॥

दर्पाङ्कुरो मदनकेतनविभ्रमाणां
निन्दाङ्कुरोपि दलितोत्पलचातुरीणाम् ।
दीपाङ्कुरो भवतमिस्रकदम्बकानां
कामाक्षि पालयतु मां त्वदपाङ्गपातः ॥ ८४ ॥

कैवल्यदीपमणिरोहणपर्वतेभ्यः
कारुण्यनिर्झरपयःकृतमज्जनेभ्यः ।
कामाक्षि किङ्करितशङ्करमानसेभ्य-
स्तेभ्योनमोस्तु तव वीक्षणविभ्रमेभ्यः ॥ ८५ ॥

अल्पीयएव नवमुत्पलमम्बुहीना
मीनस्य मासरणिरम्बुरुहस्य किं वा ।
दूरे मृगी तदसमञ्जसमञ्जनञ्च
कामाक्षि वीक्षणरुचौ तव कामयामः ॥ ८६ ॥

मिश्रीभवद्गरलपङ्किलशङ्करोरः
सीमाङ्गणे किमपि रिङ्खणमादधानः ।

हेलावधूतललितश्रवणोत्पलोऽसौ
कामाक्षि बाल इव राजति ते कटाक्षः ॥ ८७ ॥

प्रौढीकरोति विदुषां नवसूक्तिधाटीं
चूताटवीविबुधकोकिललाल्यमानम्।
माध्वीरसं परिमलञ्च निरर्गलन्ते
कामाक्षि वीक्षणविलासवसन्तलक्ष्मीः ॥ ८८ ॥

कूलङ्कषं वितनुते करुणाम्बुवर्ष-
सारस्वतं सुकृतिनः सुलभप्ररोहम्।
तुच्छीकरोति यमुनाम्बुतरङ्गभङ्गीं
कामाक्षि किं तव कटाक्षमहाम्बुवाहः ॥ ८९ ॥

जागर्ति देवि करुणांशुकसुन्दरी ते
ताटङ्करत्नरुचिदाडिमखण्डशोणे।
कामाक्षि निर्भरकटाक्षमरीचिपुञ्ज
माहेन्द्रनीलमणिपञ्जरमध्यभागे ॥ ९० ॥

कामाक्षि सत्कुवलयस्य सगोत्रभावा-
दाक्रामति श्रुतिमसौ तव दृष्टिपातः।
किञ्च स्फुटं कुटिलतां प्रकटीकरोति
भ्रूवल्लरीपरिचितस्य फलं किमेतत् ॥ ९१ ॥

एषा तवाक्षिसुषमा विषमायुधस्य
नाराचवर्षलहरी नगराजकन्ये।
शङ्के करोति शतधा हृदि धैर्यमुद्रां
श्रीकामकोटि यदसौ शिशिरांशुमौलेः ॥ ९२ ॥

बाणेन पुष्पधनुषः परिकल्प्यमान-
त्राणेन भक्तमनसां करुणाकरेण ।
कोणेन कोमलदृशः तव कामकोटि-
शोणेन शोषय शिवे मम शोकसिन्धुन् ॥ ८३ ॥

मारद्रुहोमुकुटसीमनि लल्यमाने
मन्दाकिनीपयसि ते कुटिलञ्चरिष्णुः ।
कामाक्षि कोपरभसाद्वलमानमीन-
सन्दोहमङ्कुरयति क्षणमक्षिपातः ॥ ८४ ॥

कामाक्षि सम्बलितकुण्डलमौक्तिकांशु
चञ्चत्सितश्रवणचामरचातुरीकः ।
स्तम्भे निरन्तरमपाङ्गमये भवत्याः
बद्धश्चकास्ति मकरध्वजमत्तहस्ती ॥ ८५ ॥

यावत् कटाक्षरजनी समयागमस्ते
कामाक्षि तावदचिरान्नमतां नराणाम् ।
आविर्भवत्यमृतदीधितिबिम्बमम्ब-
संविन्मयं हृदयपूर्वगिरीन्द्रशृङ्गे ॥ ८६ ॥

कामाक्षि कल्पविटपीव भवत्कटाक्षो
दित्सुसमस्तविभवन्नमतां नराणाम् ।
भृङ्गस्य नीलनलिनस्य च कान्तिसम्पत्
सर्वस्वमेव हरतीति परं विचित्रम् ॥ ८७ ॥

अज्ञातभक्तिरससम्प्रसरद्विवेक-
मत्यन्तगर्वमनधीतसमस्तशास्त्रम् ।

अप्राप्तसत्यमसमीपगतञ्च मुक्तेः
कामाक्षि नैव तव कांक्षति दृष्टिपातः ॥ ९८ ॥

अत्यन्तशीतलमनिर्गलकर्मपाक-
काकोलहारि सुलभं सुमनोभिरेतत्।
पीयूषमेव तव वीक्षणमम्ब किं तु
कामाक्षि नीलमिदमित्ययमेव भेदः ॥ ९९ ॥

यातेन लोचनरुचिस्तव कामकोटि-
पोतेन पातकपयोधिभयातुराणाम्।
पूतेन तेन नवकाञ्चनकुण्डलांशु-
पोतेन शीतलय भूधरकन्यके माम् ॥ १०० ॥

॥ मूकपञ्चशत्यां कटाक्षशतकं समाप्तम् ॥

# मन्दस्मितशतकम् ॥

॥ ५ ॥

बध्नीमो वयमञ्जलिं प्रतिदिनं बन्धच्छिदे देहिनां
कन्दर्पागमतन्त्रमूलगुरवे कल्याणकेलीभुवे ।
कामाक्ष्याघनसारपुञ्जरजसे कामद्रुहश्चक्षुषां
मन्दारस्तवकप्रभामदजुषे मन्दस्मितज्योतिषे ॥१॥

सध्रीचे नवमालिकासुमनसां नासाग्रमुक्तामणे-
राचार्याय मृणालकाण्डमहसां नैसर्गिकाय द्विषे ।
स्वर्धुन्या सह युध्वने हिमरुचेरर्धासनाध्यासिने
कामाक्ष्याः स्मितमञ्जरीधवलिमाद्वैताय तस्मै नमः ॥२॥

कर्पूरद्युतिचातुरीमतितरामल्पीयसीं कुर्वती
दौर्भाग्योदयमेव संविदधती दोषाकरीणां त्विषां ।
क्षुल्लानेव मनोज्ञमल्लिविकरान् फुल्लानभिव्यञ्जती
कामाक्ष्याः मृदुलस्मितांशुलहरी कामप्रसूरस्तु मे ॥ ३ ॥

या पीनस्तनमण्डले परिलसत्कर्पूरलेपायते
या नीलेक्षणकान्तिरात्रिततिषु ज्योत्स्नाप्ररोहायते ।
या सौन्दर्यधुनी तरङ्गततिषु व्यालोलहंसायते
कामाक्ष्याः शिशिरीकरोतु हृदयं सा मे स्मितप्राचुरी ॥४॥

येषाङ्गच्छति पूर्वपक्षसरणिं कौमुद्वतिश्वेतिमा
येषां सन्ततमारुरुक्षति तुलाकक्षांशरच्चन्द्रमाः ।

येषामिच्छति कम्बुरव्यसुन्दभामन्ते वसत् प्रक्रियां
कामाक्ष्या मम तां हरन्तु मम ते हासत्विषामङ्कुराः ॥ ५ ॥
आशासीमसु सन्तत विदधती नैशाकरीं प्रक्रियां
काशानामभिमानभङ्गकलनाकौशल्यमाबिभ्रती।
ईशानेन विलोकिता सकुतुकं कामाक्षि तेकल्मष
क्लेशापायकरी चकास्ति लहरी मन्दस्मितज्योतिषां ॥६॥
आरूढस्य समुन्नतस्तनतटी साम्राज्यसिंहासनं
कन्दर्पस्य विभोर्जगत्त्रयजयप्राकट्य मुद्रानिधेः।
यस्याश्चामरचातुरीं कलयतेरश्मिच्छटा चञ्चला
सा मन्दस्मितमञ्जरी भवतु नः कामाय कामाक्षि ते ॥ ७ ॥
शम्भोर्या परिरम्भसम्भ्रमविधौ नैर्मल्यसीमानिधे-
र्गैर्वाणीव तरंगिणी कृतमृदुस्यन्दा कलिंदात्मजां।
कल्माषीकुरुते कलङ्कसुषमां कण्ठस्थलीचुम्बिनीं
कामाक्ष्याः स्मितकन्दली भवतु सा कल्याणसन्दोहिनी ॥ ८ ॥
जेतुं हारलतामिव स्तनतटीं सञ्जग्मुषी सन्तत-
ञ्चन्तु निर्मलतामिव द्विगुणितां मग्ना द्युगा स्रोतसि।
वक्तुं विस्मयनीयतामिव हरं रागाकुलं कुर्वती
मञ्जुस्ते स्मितमंजरी भवभयं मथ्नातु कामाक्षि मे ॥ ९ ॥
श्वेतापि प्रकटं निशाकररुचां मालिन्यमातन्वती
शीतापि स्मर पावकं पशुपतेस्संधुक्षयन्ती सदा।
स्वाभाव्यादधराश्रितापि नमतामुच्चैर्दिशन्ती गतिं
कामाक्षि स्फुटमन्तरा स्फुरतु नस्त्वन्मन्दहासप्रभा ॥१०॥

वक्त्रश्रीसरसीजले तरलितभ्रूवल्लिकल्लोलिते
कालिम्नाद्दधती कटाक्षजनुषा माधुव्रतीं व्यापृतीं ।
निर्निद्रामलपुण्डरीककुहनापाण्डित्यमाबिभ्रती
कामाक्ष्या स्मितचातुरी मम मनः कातर्यमुन्मूलयेत् ॥ ११ ॥
नित्याराधितबन्धुजीवमधरं मैत्रीजुषं वल्लवैः
शुद्धस्य द्विजमण्डलस्य च तिरस्कर्तारमप्याश्रिता ।
या वैमल्यवती सदैव नमताञ्चेतः पुनीतेतरां
कामाक्ष्या हृदयं प्रसादयतु मे सा मन्दहासप्रभा ॥ १२ ॥
द्रुह्यन्ती तमसे मुहुः कुमुदिनीसाहाय्यमाबिभ्रती
यान्ती चन्द्रकिशोरशेखरवपुःसौधाङ्गणे प्रेङ्खणम् ।
ज्ञानाम्भोनिधिवीचिकां सुमनसां कूलङ्कषाङ्कुर्वती
कामाक्ष्यास्मितकौमुदी हरतु मे संसारतापोदयम् ॥ १३ ॥
काश्मीरद्रवधातुकर्दमरुचा कल्माषतां बिभ्रती
हंसौघैरिव कुर्वती परिचितं हारीकृतैर्मौक्तिकैः ।
वक्षोजन्मतुषारशैलकटके सञ्चारमातन्वती
कामाक्ष्या मृदुलस्मितद्युतिमयी भागीरथी भासते ॥ १४ ॥
कम्बोर्वंशपरम्परा इव कृपासन्तानवल्लीभुवः
सम्फुल्लस्तबका इव प्रशमरामूर्ताः प्रसादा इव ।
वाक्पीयूषकणा इव त्रिपथगा पर्यायभेदा इव
भ्राजन्ते तव मन्दहासकिरणाः काञ्चीपुरीनायिके ॥१५॥
वक्षोजे घनसारपत्ररचनाभङ्गी सपत्नायिता
कण्ठे बन्धुरदन्तपत्रकुहना व्यापारमुद्रायिता ।

ओष्ठश्रीनिकुरम्बपल्लवपुटे प्रेङ्खत्प्रसूनायिता
कामाक्षि स्फुरतां मदीयहृदये त्वन्मन्दहासप्रभा ॥ १६ ॥

येषां बिन्दुरिवोपरि प्रचलितो नासाग्रमुक्तामणिः
येऽमन्दानन्दवाधिकं ठमयति हारः करालम्बनम् ।
येषां बिन्दुरिवोष्ठयोररुणिमा धत्ते स्वयं रञ्जनां
कामाक्ष्याः प्रसरन्तु ते मम शिवोल्लासाय हासाङ्कुराः ॥१७॥

या जाड्याम्बुनिधिं क्षिणोति भजतां वैरायते कैरवैः
नित्यं या नियमेन धावयति ते कर्तुं त्रिनेत्रोत्सवम् ।
बिम्बं चान्द्रमसञ्च वञ्चयति या गर्वेण सा तादृशी
कामाक्षि स्मितमञ्जरी तव कथं ज्योत्स्नेत्यसौ कीर्त्यते ॥१८॥

आरूढा रभसात्पुरा पुररिपोरास्ये पण्योपक्रमे
या ते मातरुपैति दिव्यतटिनी शङ्काकरी तत्क्षणम् ।
ओष्ठौ वेपयति भ्रुवौ कुटिलयत्यानम्रयत्याननं
तां वन्दे मृदुहासपूरसुषमामेकाम्रनाथप्रिये ॥ १९ ॥

वक्त्रेन्दोस्तव चन्द्रिकास्मितरुचिर्वल्गु स्फुरन्ती सतां
स्याच्चेद्युक्तमिदं चकोरमनसां कामाक्षि कौतूहलम् ।
एतच्चित्रमहर्निशं यदधिकं सैषा सदा गाहते
बिम्बोष्ठद्युमणिप्रभास्वपि च यद्बिब्बोकमाबिभ्रते ॥ २० ॥

साहाय्यं कलशाम्बुधेर्वहति ते कामाक्षि मन्दस्मितं
शोभामोष्ठरुचाञ्च विद्रुमनिभामेतद्विदां ब्रूमहे ।
एतस्मादुदितं पुरा किल पपौ कूर्मः पुराणः पुमान्
एतन्मध्यसमुद्भवां रसयति माधुर्यरूपां सुधाम् ॥ २१ ॥

उत्तुङ्गस्तनकुम्भशैलकटके विस्तारिकस्तूरिका
पत्त्रश्रीजुषि चञ्चलास्मितरुचः कासाश्चित्ते कोमलाः ।
सन्ध्यादीधितिरञ्जिता इव मुहुस्सान्द्रान्धकारज्योतिषा
व्यालोलामलशारदाभ्रशकलव्यापारमातन्वते ॥ २२ ॥
क्षीरं दूरत एव तिष्ठतु कथं वैमल्यमात्रादिदं
मातस्ते सह पाठवीथिमयतां मन्दस्मितैर्मञ्जुलैः ।
किञ्चेयन्तु भिदास्ति दोहनवशादेतत्तु सञ्जायते
कामाक्षि स्वयमर्थितं प्रणमतामन्यत्तु दोदुह्यते ॥ २३ ॥
कर्पूरैरमृतांशुभिर्जननि ते कान्त्यैश्च चन्द्रातपै
र्मुक्ताहारगुणैर्मृणालवलयैर्मुग्धस्मितश्रीरियम् ।
श्रीकाञ्चीपुरनायिके समतया संस्तूयते सज्जनै-
स्तत्तादृङ्मम तापशान्तिविधये किं देवि मन्दायते ॥ २४ ॥
मध्येगर्भितमञ्जुवाक्यलहरी माध्वीझरी शीतला
मन्दारस्तबकायते जननि ते मन्दस्मितांशुच्छटा ।
यस्या बन्धयितुं मुहुर्विकसितं कामाक्षि कामद्रुहो
वल्गुर्वीक्षणविभ्रमव्यतिकरो वासन्तमासायते ॥ २५ ॥
बिम्बोष्ठद्युतिपुञ्जरञ्जितरुचिस्त्वन्मन्दहासप्रभा
कल्याणं गिरिसार्वभौमतनये कल्लोलयत्वाशु मे ।
फुल्लन्मल्लिपिनद्धहल्लकमयी मालेव या पेशला
श्रीकाञ्चीश्वरि मारमर्दितुरुरोमध्ये मुहुर्लम्बते ॥ २६ ॥
बिभ्राणां शरदभ्रविभ्रमदशां खद्योतमानाप्यसौ
कामाक्षि स्मितमञ्जरी किरति ते कारुण्यधारारसम् ।

आश्चर्यं शिशिरीकरोति नितरां व्यालोक्य चैनामहो
कामद्वेलति नीलकण्ठहृदयं कौतूहलान्दोलितम् ॥ २७ ॥
प्रेङ्खत्प्रौढकटाक्षकुञ्जकुहरेष्वत्यच्छगुच्छायितं
वक्त्रेन्दुच्छविसिन्धुवीचिनिचये फेनप्रतानायितम् ।
नैरन्तर्यविजृम्भितस्तनतटी नैचोलपट्टायितं
कल्माषं कबलीकरोतु मम ते कामाक्षि मन्दस्मितम् ॥ २८ ॥
पीयूषं तव मन्थरस्मितमिति व्यर्थैव सा च प्रथा
कामाक्षि ध्रुवमीदृशं यदि भवेदेतत्कथं वा शिवे ।
मन्दारस्य कथालवं न सहते मथ्नाति मन्दाकिनीं
इन्दुं निन्दति कीर्तिते च कलसीपाथोनिधेरीर्ष्यति ॥ २९ ॥
विश्वेषां नयनोत्सवं वितनुतां विद्योततां चन्द्रमाः
विख्यातो मदनान्तकेन मुकुटीमध्ये च संमान्यताम् ।
आः किं जातमनेन हाससुषमामालोक्य कामाक्षि ते
कालङ्कीमवलम्बते खलु दशां कल्माषहीनोऽप्यसौ ॥ ३० ॥
चेतः शीतलयन्तु नः पशुपतेरानन्दजीवातवो
नम्राणां नयनाध्वसीमसु शरच्चन्द्रातपोपक्रमाः ।
संसाराख्यसरोरुहाकरखलीकारे तुषारोत्कराः
कामाक्षि स्मरकीर्तिबीजनिकरास्त्वन्मन्दहासाङ्कुराः ॥ ३१ ॥
कर्मौघाख्यतमः कचाकचिकरान् कामाक्षि सञ्चिन्तये
त्वन्मन्दस्मितरोचिषास्त्रिभुवनक्षेमङ्करानङ्कुरान् ।
ये वक्त्रं शिशिरश्रियो विकसितं चन्द्रातपाम्भोरुह-
द्वेषोद्घर्षणचातुरीमिव तिरस्कर्तुं परिष्कुर्वते ॥ ३२ ॥

कुर्युर्नः कुलशैलराजतनये कूलङ्कषम्मङ्गलं
कुन्दस्पर्धनचुञ्चवस्तव शिवे मन्दस्मितप्रक्रमाः ।
हे कामाक्षि समस्तसाक्षिनयनं सन्तोषयन्त्यान्तरं
कर्पूरप्रकरा इव प्रसृमराः पुंसामसाधारणाः ॥ ३३ ॥
कम्रेण शमयस्व कर्मकुहनाचौरेण मारागम-
व्याख्याशिक्षणदीक्षितेन विदुषा सच्चीपलक्ष्मीजुषा ।
कामाक्षि स्मितकन्दलेन कलुषस्फोटक्रियाचुञ्चुना
कारुण्यामृतवीचिकाविहरणप्राचुर्यधुर्येण माम् ॥ ३४ ॥
त्वन्मन्दस्मितकन्दलस्य नियतं कामाक्षि शङ्कामहे
बिब्बोकस्य नूतनः प्रचलितो नैशाकरश्रीकरः ।
किञ्चित् क्षीरपयोनिधिः प्रतिनिधिः स्वर्वाहिनीवीचिका
बिब्बो कोपि विडम्ब एव कुहनामल्लीमतल्लीरुचिः ॥ ३५ ॥
दुष्कर्मार्कनिसर्गकर्कशमहःसम्पर्कतप्तं मिल-
त्पङ्कं शङ्करवल्लभे मम मनः काञ्चीपुरालङ्क्रिये ।
अम्ब त्वन्मृदुलस्मितामृतरसैः स्नात्वा विधूय व्यथां
आनन्दोदयसौधशृङ्गपदवीमारोढुमाकाङ्क्षति ॥ ३६ ॥
नम्राणां नगराजशेखरसुते नाकालयानां पुरः
कामाक्षि त्वरया विपत्प्रशमने कारुण्यधाराः किरन् ।
आगच्छन्तमनुग्रहं प्रकटयन् आनन्दबीजानि ते
नासीरे मृदुहास एव तनुते साथे सुधाशीतलः ॥ ३७ ॥
कामाक्षि प्रथमानविभ्रमनिधिः कन्दर्पदर्प-
प्रसूर्मुग्धस्ते मृदुहास एव गिरिजे मुष्णातु मे किल्बिषम् ।

य दृष्टिविहिते करग्रहउमे शम्भुस्त्रपामीलितं
स्मेरं कारयति स्म ताण्डवविनोदाहिण्डिना तण्डुना ॥ ३८ ॥

क्षुण्णं केनचिदेव धीरमनसा कुत्रापि नानाजनैः
कर्मग्रन्थिनियन्त्रितैरसुगमं कामाक्षि सामान्यतः ।
मुग्धैर्द्रष्टुमशक्यमेव तमसोमूढस्य मे चक्षुषा
मार्गं दर्शयतु प्रदीपइव ते मन्दस्मितश्रीरियम् ॥ ३९ ॥

ज्योत्स्नाकान्तिभिरेव निर्मलतरं नैशाकरं मण्डलं
हंसैरेव सरोविलक्षसलिलैर्व्याकोचमम्भोरुहं ।
स्वच्छैरेव विकस्वरैरुडुगणैः कामाक्षि विश्वन्दिवः
पुण्यैरेव मृदुस्मितैस्तव मुखं पुष्णाति शोभान्तरम् ॥ ४० ॥

मानग्रन्थिविधुन्तुदेन रभसादास्वाद्यमानोनव-
प्रेमाडम्बरपूर्णिमा हिमकरे कामाक्षि ते तत्क्षणं ।
आलोक्य स्मितचन्द्रिकां मुहुरिमामुन्मीलनंजग्मुषी
चेतश्शालयति चकोरचरितं चन्द्रार्धचूडामणेः ॥ ४१ ॥

कामाक्षि स्मितमञ्जरीं तव भजे यस्यास्त्विषामङ्कुरा
नापीनस्तनपानलालसतया निःशङ्कमङ्केशयः ।
ऊर्ध्वं वीक्ष्य विकर्षति प्रसृमरानुद्दामया शुण्डया
सूनुस्ते बिसशङ्कयाशुकुहना दन्तावलग्रामणीः ॥ ४२ ॥

गाढाश्लेषविमर्दसम्भ्रमवशादुद्दाममुक्तागुण-
प्रालम्बे कुचकुम्भयोर्विदलिते दक्षद्विषोवक्षसि ।
या सख्येन पिनह्यति प्रचुरया भासा तदीयां दशां
सा मे खेलति कामकोटिहृदये सान्द्रस्मितांशुच्छटा ॥ ४३ ॥

मन्दारे तव मन्दरस्मितरुचोमात्सर्यमालोक्यते
कामाक्षि स्मरशासने च नियतं रागोदयो लक्ष्यते ।
चान्द्रीषु द्युतिमञ्जरीषु च महादोषाङ्कुरोद्दृश्यते
शुद्धानां कथमीदृशो गिरिसुते शुद्धा दशा कथ्यताम् ॥ ४४ ॥
पीयूषं खलु पीयते सुरजनैर्दुग्धांबुधिर्मथ्यते
माहेशैश्च जटाकलापनिगलैर्मन्दाकिनी नह्यते ।
शीतांशुः परिभूयते च तमसा तस्मादनेतादृशी
कामाक्षि स्मितमञ्जरी तव वचोवैदग्ध्यमुल्लङ्घते ॥ ४५ ॥
आशङ्के तव मन्दहासलहरी मन्यादृशीं चन्द्रिका-
मेकाम्रेशकुटुम्बिनि प्रतिपदं यस्याः प्रभासङ्गमे ।
वक्षोजांबुरुहौ न ते रभयदं काश्चोदयात्कामली-
मस्यांभोरुहमम्ब किञ्च शनकैरालम्बते फुल्लतां ॥४६॥
आस्तीर्णाधरकान्तिपल्लवचये वासं मुहुर्जग्मुषी
कामद्रोहिणि मांसलस्मरशरज्वालावलीं व्यञ्जती ।
निघ्नन्ती घनसारहारवलयज्योत्स्नामृणालानि ते
कामाक्षि स्मितचातुरी विरहिणीरीतिं जगाहेतरां ॥४७॥
सूर्यालोकविधौ विकासमधिकं यान्ती हरन्ती तमः
संदोहं नयनाब्जिनस्मरणतो दोषाकरद्वेषिणी ।
निर्यान्ती वदनारविन्दकुहरान्निर्धूतजाड्यात्मनां
श्रीकामाक्षि शिवे तव स्मितमयी चित्रीयते चन्द्रिका ॥४८॥
कुण्ठीकुर्युरमी कुबोधघटना मस्मन्मनोमन्थिनीं
श्रीकामाक्षि शिवंकरास्तव शिवे श्रीमन्दहासांकुराः ।

ये तन्वन्ति निरन्तरं तरुणिमस्तंबेरमग्रामणी
कुम्भद्वन्द्वविडम्बिनि स्तनतटे मुक्ताकुथाडम्बरम् ॥ ४९ ॥

प्रेङ्खन्तः शरदम्बुदा इव घनैः प्रेमानिलैः प्रेरिता
मज्जन्तीमदनारिकण्ठसुषमासिन्धौ मुहुर्मन्थरं ।
श्रीकामाक्षि तव स्मितांशुनिकराश्श्यामायमानश्रियो-
नीलांभोधरनैपुणीं ततद्रुतोनिर्निद्रयंत्यञ्जसा ॥५०॥

व्यापारं चतुराननैकविहृतौ व्याकुर्वती कुर्वती
रुद्राक्षग्रहणं करेण सततं वागूर्मिकल्लोलिता ।
उत्फुल्लद्धवलारविन्दमधरीकृत्य स्फुरन्ती सदा
श्रीकामाक्षि सरस्वतीव जयति त्वन्मन्दहासप्रभा ॥ ५१ ॥

कर्पूरद्युतितस्करेण महसा कल्मावयन्ती मुखं
श्रीकाञ्चीपुरनायिके पतिरिव श्रीमन्दहासोपि ते ।
आलिङ्गत्यतिपीवरां स्तनतटीं बिम्बाधरं चुम्बति
प्रौढं गाढभरं व्यनक्ति मनसोधैर्यं धुनीतितरां ॥ ५२ ॥

वैशद्येन च विश्वतापहरणक्रीडापटीयस्तया
पाण्डित्येन पचेलिमेन जगतां नेत्रोत्सवोत्पादने ।
कामाक्षि स्मितकन्दलैस्तव तुलामारोढुमुद्योगिनी
ज्योत्स्नासौ जलराशिपोषणतया दूष्यां प्रपन्ना दशाम् ।५३

लावण्याम्बुजिनी मृणालवलयैः शृङ्गारगर्जद्द्विप-
ग्रामण्यश्रुतिचामरैस्तरुणिमस्वाराज्यवीजांकुरैः ।
आनन्दामृतसिन्धुवीचिपृषतैरास्याब्जहंसैस्तव
श्रीकामाक्षि मथानमन्दहसितैस्तैर्मे मनःकल्मषम् ॥ ५४॥

उत्तुङ्गस्तनमण्डलीपरिचलन्माणिक्यहारच्छटा-
चञ्चच्छोणिमपुञ्जमध्यसरणिं मातः परिष्कुर्वती ।
या वैदग्ध्यमुपैति शाङ्करजटाकान्तारवाटीपतत्
स्वर्वापीपयसां स्मितद्युतिरसौ कामाक्षि ते मञ्जुला ॥ ५५ ॥
सन्नामैकजुषा जनेन सुलभं संसूचयन्ती शनै-
रुत्तुङ्गस्य चिरादनुग्रहतरोरुत्पत्स्यमानं फलम् ।
प्राथम्येन विकस्वरा मलसुमप्रागल्भ्यमन्वीयुषी
कामाक्षि स्मितचातुरी तव मम क्षेमंकरी कल्पताम् ॥ ५६ ॥
धानुष्काग्रसरस्य लोलकुटिलभ्रूलेखया बिभ्रतो
लीलालोलशिलीमुखं नववयस्साम्राज्यलक्ष्मीपुषः ।
जेतुं मन्मथमर्दिनं जननि ते मन्दस्मितप्रक्रमो
वल्गुविभ्रमभूभृतोपि तनुते सेनापतिप्रक्रियां ॥ ५७ ॥
यन्नाकम्पत कालकूटकबलीकारे च चुम्बेन यद्
ग्लानिं चक्षुषि रक्षितानलशिखे रुद्रस्य तत्तादृशं ।
चेतो यत्प्रसभं स्मरज्वरशिखिज्वालेन लेलिह्यते
तत् कामाक्षि तव स्मितांशुकणिका हेलाभवं प्राभवं ॥ ५८ ॥
सम्भिन्नेव सुपर्वलोकतटिनीवीचीचयैर्यामुनैः
सम्मिश्रेव शशाङ्कदीप्तिलहरी नीलैर्महानीरदैः ।
कामाक्षि स्फुरिता तव स्मितरुचिः कालाञ्जनस्पर्धिना
कालिम्ना कचरोचिषां व्यतिकरे काञ्चिद्दशामश्नुते ॥ ५९ ॥
जानीमो जगदीश्वरि प्रणमतां त्वन्मन्दहासप्रभां
श्रीकामाक्षि कुरूहतीमभिनवामेषा यतस्सर्वदा ।

आस्येन्दोरवलोकने पशुपते रभ्येति संफुल्लतां
तन्द्रालुस्तदभावएव तनुते तद्वैपरीत्यक्रमं ॥ ६० ॥

यान्ती लोहितिमानमभ्रतटिनी धातुच्छटाकर्दमै-
र्भान्तीबालगभस्तिमालिकिरणैर्मेघावली शारदी ।
बिम्बोष्ठद्युतिपुञ्जचुम्बनकलाशोणायमानेन ते
कामाक्षि स्मितरोचिषा समदशामारोढुमाकाङ्क्षते ॥ ६१ ॥

श्रीकामाक्षि मुखेन्दुभूषणमिदं मन्दस्मितं तावकं
नेत्रानन्दकरन्तथा हिमकरो गच्छेद्यथा तिग्मतां ।
शीतं देवि तथा यथा हिमजलं सन्तापमुद्रास्पदं
श्वेतं किञ्च तथा यथा मलिनतां धत्ते च मुक्तामणिः ॥ ६२ ॥

त्वन्मन्दस्मितमञ्जरीं प्रसृमरां कामाक्षि चन्द्रातपं
सन्तस्स्मितमामनन्ति कलितं तल्लक्षणं लक्ष्यते ।
अस्माकं न धुनोति तापमधिकं धुनोति नाभ्यन्तरं
ध्वान्तं तत् खलु दुःखितावयममी केनेति जानीमहे ॥ ६३ ॥

नम्रस्य प्रणयप्ररोहकलहच्छेदायपादाब्जयो-
र्मन्दं चन्द्रकिशोरशेखरमणेः कामाक्षि रागेण ते
बन्धूकप्रसवश्रियं जितवतीवर्षीयसीं तद्रुचिं
बिम्बोष्ठस्य रुचिर्निरस्य हसितज्योत्स्नावयस्यायते ॥ ६४ ॥

मुक्तानां परिमोचनं विदधतस्तत्प्रीतिनिष्पादिनी
भूयोदीयत एव हूनमनसस्तत्पालनं तन्वती ।
उद्भूतस्य जलान्तरादविरतं तद्दूरतां जग्मुषो
कामाक्षि स्मितमञ्जरी तव कथं कम्बोस्तुलामश्नुते ॥ ६५ ॥

श्रीकामाक्षि तव स्मितद्युतिझरी वैदग्ध्यलीलायितं
पश्यन्त्योपि निरन्तरं सुविमलं मान्या जगन्मण्डले ।
लोकं भासयितुं किमर्थमनिशं प्राकाश्यमातन्वते
मन्दाक्षं विरहय्य वस्तुविभवैर्मन्दारचन्द्रोदयाः ॥ ६६ ॥

क्षीराब्धेरपि शैलराजतनये त्वन्मन्दहासस्य च
श्रीकामाक्षि वलक्षिमोदयनिधेः किञ्चिद्भिदां ब्रूमहे ।
एकस्मै पुरुषाय देवि स ददौ लक्ष्मीं कदाचित्पुरा
सर्वेभ्योपि ददात्यसौ तु सततं लक्ष्मीं च वागीश्वरीं ॥ ६७ ॥

श्रीकाञ्चीपुररत्नदीपकलिके तान्येव विश्वान्तरे
चाकोराणि चराचरेश्वरि परं धन्यानि मन्यामहे ।
कम्पातीरकुटुम्बचङ्क्रमकलाचुञ्चूनि चञ्चूपुटैः
नित्यं यानि तव स्मितेन्दुमहसामास्वादमातन्वते ॥ ६८ ॥

शैत्यप्रक्रममाश्रितोपि नमतां जाड्यप्रभां धूनयन्
रागव्यञ्जनपेशलोपि गिरिजे वैमल्यमुल्लासयन् ।
लीलालापपुरस्सरोपि सततं वाचंयमान् प्रीणयन्
कामाक्षि स्मितरोचिषान्तव समुल्लासः कथं वर्ण्यते ॥ ६९ ॥

श्रोणी चञ्चलमेखला मुखरितं लीलागतं मन्थरं
भ्रूवल्लीचलनं कटाक्षवलनं मन्दाक्षवीक्षाचणम् ।
यद्वैदग्ध्यमुखेन मन्मथरिपुं सम्मोहयत्यञ्जसा
श्रीकामाक्षि तव स्मिताय सततं तस्मै नमस्कुर्महे ॥ ७० ॥

श्रीकामाक्षि मनोज्ञमन्दहसितज्योतिःप्ररोहे तव
स्फीतश्वेतिमसार्वभौमसरणिप्रागल्भ्यमभ्येयुषि ।

चन्द्रीयं युवराजतां कलयते चेटीधुरं चन्द्रिका
गङ्गा सा च सुधाझरी सहचरी साधर्म्यमालम्बते ॥ ७१ ॥
ज्योत्स्ना किं तनुते फलं तनुमतामौष्ण्यप्रशान्तिं विना
त्वन्मन्दस्मितरोचिषा तनुमतां कामाक्षि रोचिष्णुना ।
सन्तापो विनिवार्यते निजवचःप्राचुर्यमं कुर्यते
सौन्दर्यं परिपूर्यते जगति सा कीर्तिश्च सन्तार्यते ॥ ७२ ॥
वैमल्यं कुमुदश्रियां हिमरुचः कान्त्येव सन्धुक्षते
ज्योत्स्नारोचिरपि प्रदोषसमयं प्राप्यैव सम्पद्यते ।
स्वच्छत्वं नवमौक्तिकस्य परमं संस्कारतो दृश्यते
कामाक्ष्याःस्मितदीधितेर्विशदिमा नैसर्गिका भासते ॥ ७३ ॥
प्राकाश्यं परमेश्वरप्रणयिनि त्वन्मन्दहासश्रिय-
श्रीकामाक्षि मम क्षिणोतु ममता वैचक्षणीमक्षयाम् ।
यद्भीत्यैव निलीयते हिमकरो मेघोदरे शुक्तिका-
गर्भे मौक्तिकमण्डली च सरसीमध्ये मृणाली च सा ॥ ७४ ॥
हेरम्बे च गुहे च हर्षभरितं वात्सल्यमङ्कूरयन्
मारद्रोहिणि पूरुषे सहभवं प्रेमाङ्कुरं व्यञ्जयन् ।
आनम्रेषु जनेषु पूर्णकरुणावैदग्ध्यमुत्तालयन्
कामाक्षि स्मितमञ्जरस्तव कथङ्कारं मया कथ्यते ॥ ७५ ॥
सङ्क्रान्तद्विजराजकोऽप्यविरतं कुर्वन् द्विजैस्सङ्गमं
वाणीपद्धतिदूरकोऽपि सततं तत्साहचर्यं वहन् ।
आशान्तं पशुदुर्लभोऽपि कलयन् पत्यौ पशूनां रतिं
श्रीकामाक्षि तव स्मितामृतरसस्यन्दोमयि स्यन्दताम् ॥ ७६ ॥

श्रीकामाक्षि महेश्वरे निरुपमप्रेमाङ्कुरप्रक्रमं
नित्यं यः प्रकटीकरोति सहजामुन्निद्रयन्माधुरीम् ।
तत्तादृक् तव मन्दहाससुषमापातं कथं मानितं
तन्मूर्धासुरनिम्नगाञ्च कलिकामिन्दोश्च ता नन्दति ॥ ७७॥
ये माधुर्यविहारमण्डपभुवो ये शैत्यमुद्राकरा
ये वैशद्यदशाविशेषसुभगास्ते मन्दहासाङ्कुराः ।
कामाक्ष्याः सहजं गुणत्रयमिदं पर्यायतः कुर्वतां
वाणीगुम्फनडम्बरे च हृदये कीर्तिप्ररोहे च मे ॥ ७८ ॥
कामाक्ष्या मृदुलस्मितांशुनिकरा दाक्षान्तके वीक्षणे
मन्दाक्षग्रहिला हिमद्युतिमयूखाक्षेपदीक्षाकराः ।
दाक्ष्यं पक्ष्मलयन्तु माक्षिकगुडद्राक्षाभवं पक्षमे
सूक्ष्मं मोक्षपथं निरीक्षितुमपि प्रक्षालयेयुर्मनः ॥ ७९ ॥
जात्या शीतलशीतलानि मधुराण्येतानि पूतानि ते
गाङ्गानीव जलानि देवि पटलान्यल्पस्मितज्योतिषाम् ।
एनः पङ्कपरम्परामलिनितामेकाम्रनाथप्रिये
प्रज्ञानां सुतरां मदीयधिषणां प्रक्षालयन्तु क्षणात् ॥ ८० ॥
अश्रान्तं परतन्त्रितः पशुपतिस्त्वन्मन्दहासाङ्कुरैः
श्रीकामाक्षि तदीयवर्णसमतासङ्गेन शङ्कामहे ।
इन्दुं नाकधुनीञ्च शेखरयते मालाञ्च धत्ते नवै-
र्वैकुण्ठैरवकुण्ठनञ्च कुरुते धूलीचयैर्भास्मनैः ॥ ८१ ॥
श्रीकाञ्चीपुरदेवते मृदुवचस्सौरभ्यमुद्रास्पदं
प्रौढप्रेमलतानवीनकुसुमं मन्दस्मितन्तावकम् ।

संह्रीकुन्दलय प्रियस्य वदनालोके समाभाषणे
श्लक्ष्णे कुट्मलितप्ररूढपुलके यच्छ्लेषणे फुल्लति ॥ ८२ ॥

किन्त्वै स्रोतसमम्बिके परिणतं स्रोतश्चतुर्थं नवं
पीयूषस्य समस्ततापहरणं किं वा द्वितीयं वपुः ।
किं स्विन्नैः कठिकं गिरीशमधुरिमास्वादाय नव्यम्पयः
श्रीकाञ्चीपुरनायकप्रियतमे मन्दस्मितन्तावकम् ॥ ८३ ॥

भूषावक्त्र सरोरुहस्य सहजा वाचस्सखी शाश्वती
नीवीविस्रमसन्ततेः पशुपतेस्साध्वी दृशां वारणा ।
जीवातुर्मदनश्रियश्शशिरुचेरुच्चाटनी देवता
श्रीकामाक्षि गिरामभूमिमयते हासप्रभामञ्जरी ॥ ८४ ॥

सूतीश्वेतिमकन्दलस्य वसतिः शृङ्गारसारश्रियः
पूर्तिस्सूक्तिझरी रसस्य लहरी कारुण्यपाथोनिधेः ।
वाटी काचन कौसुमी मधुरिमस्वाराज्यलक्ष्म्यास्तव
श्रीकामाक्षि ममास्तु मङ्गलकरी हासप्रभाचातुरी ॥८५॥

तुङ्गस्य स्तनमण्डलस्य विलसल्लावण्यलीलानटी
रङ्गस्य स्फुटमूर्ध्वसीमनि मुहुः प्राकाश्यमभ्येयुषी ।
श्रीकामाक्षि तव स्मितद्युतितति र्बिम्बोष्ठकान्त्यङ्कुरै-
श्चित्रां विद्रुममुद्रिकां वितनुते मौक्तीं वितानश्रियम् ॥८६॥

जन्तूनाञ्जनिकृत्तदुःखलहरीसन्तापनं कृन्ततः
प्रौढानुग्रहपूर्णशीतलरुचो नित्योदयं बिभ्रतः ।
श्रीकामाक्षि विसृत्वरा इव करा हासाङ्कुरास्ते हठा-
दालोकेन निहन्युरन्धतमसस्तोमस्य मे सन्ततिम् ॥८७॥

स्वाभाव्यात्तव वक्त्रमेव ललितं सन्तोषसम्पादकं
शम्भोः किं पुनरञ्चितस्मितरुचः पाण्डित्यपात्रीकृतम् ।
अम्भोजं स्वत एव सर्वजगतां चक्षुःप्रियं भावुकं
कामाक्षि स्फुरिते शरद्विलसिते कीदृग्विधम्भासते ॥ ८८ ॥
पुम्भिर्निर्मलमानसैर्विदधते मैत्रीरसं निर्मलं
कर्त्तुं कर्मलयञ्च निर्मलतमां कीर्त्तिं लभन्तेतराम् ।
सूक्तिं पक्ष्मलयन्ति निर्मलगुणा यत्तावकास्सेवका
तत्कामाक्षि तव स्मितस्य किल सन्नैर्मल्य लीलानिधेः॥८९॥
आकर्षन्नयनानि नाकसदसां शैत्येन संस्तम्भय-
न्निंदुं किञ्च विमोहयन् पशुपतिं विश्वार्तिमुच्चाटयन् ।
हिंसन् संसृतिडम्बरं तव शिवे हासाह्वयोमान्त्रिक-
श्रीकामाक्षि मदीयतापतमसोविद्वेषणे चेष्टताम् ॥ ९० ॥
क्षेपीयः क्षपयन्तु कल्मषभयं त्वस्माकमल्पस्मित-
ज्योतिर्मण्डलचंक्रमास्तव शिवे कामाक्षि रोचिष्णवः ।
पीडाकर्मठकर्मवर्मसमयव्यापारतापानल-
श्रीवातानवहर्षवर्षणसुधास्रोतस्विनी शीकराः ॥ ९१ ॥
श्रीकामाक्षि तव स्मितैन्दवमहः पूरे परिस्फूर्जति
प्रौढिर्वारिधिचातुरीं कलयते भक्तात्मनां प्रातिभा ।
दौर्गत्यप्रसरस्तमःप्रकटिका साधर्म्यमाबिभ्रते
किं किङ्करवसाहचर्यपदवीरीत्या न धत्ते पदम् ॥ ९२ ॥
मन्दारादिषु मन्मथारिमहिषि प्राकाश्यरीतिन्निजां
कादाचित्कतया विशङ्क्य बहुशोवैशद्यमुद्रागुणः ।

श्रीकामाक्षि तदीय सङ्गमकलामन्दीभवत्कौतुकः
सान्तत्येन तव स्मिते वितनुते स्वैरासना वासनाम् ॥८३॥
इन्धाने भववीतिहोत्रनिवहे कर्मौघचण्डानिल
प्रौढिम्ना बहलीकृते निपतितं सन्तापचिन्ताकुलं ।
मातर्मां परिषिञ्च किञ्चिदरुणैः पीयूषवर्षैरिव
श्रीकामाक्षि तव स्मितद्युतिकणैरोष्ठांशुलीलाचणैः ॥ ८४ ॥
भाषाया रसनाग्रलेखनजुषः शृङ्गारमुद्रासखी
लीलाजातरतेस्सुखेन नियमस्नानाय मेनात्मजे ।
श्रीकामाक्षि सुधामयीव शिशिरा स्रोतस्विनी तावकी
गाढानन्दतरङ्गिता विजयते हासप्रभाचातुरी ॥८५॥
सन्तापं विरलीकरोतु सततं कामाक्षि मच्चेतना
मज्जन्ती मधुरस्मितामरधुनी कल्लोलजालेषु ते ।
नैरन्तर्यमुपेत्य मन्मथमरुल्लोलेषु येषु स्फुटं
प्रेमेन्दुः प्रतिबिम्बितोवितनुते कौतूहलं धूर्जटेः ॥ ८६ ॥
चेतःक्षीरपयोधिमन्थनचलद्रागाख्यमन्थाचल-
क्षोभव्यापृतिसम्भवां जननि ते मन्दस्मितश्रीसुधां ।
स्वादं स्वादमुदीतकौतुकरसं नेत्रत्रयी शांकरी
श्रीकामाक्षि निरन्तरं परिणमत्यानन्दवीचीमयी ॥ ८७ ॥
आलोके तव पञ्चसायकरिपोरुद्दामकौतूहल
प्रेङ्खन्मारुतघट्टनप्रचलितादानन्ददुग्धाम्बुधेः ।
काचिद्वीचिमुदञ्चतीं प्रतिनवां संवित्प्ररोहात्मिकां
श्रीकामाक्षि कवीश्वरस्मितमिति व्याकुर्वते सर्वदा ॥८८॥

सूक्तिं शीलयते किमद्रितनये मन्दस्मितात्ते मुहु-
र्माधुर्यागमसम्प्रदायमथवा सूते नु मन्दस्मितम् ।
इत्थङ्कामपि गाहते मम मनस्सन्देहमार्गभ्रमीं
श्रीकामाक्षि न पारमार्थ्यसरणिस्फूर्तौ निधत्ते पदम् ॥ ९९ ॥

क्रीडालोलकृपासरोरुहमुखी सौधाङ्गणेभ्यः कवि-
श्रेणीवाक्परिपाटिकामृतझरी सूतिग्रहेभ्यः शिवे ।
निर्वाणाङ्कुरसार्वभौमपदवीसिंहासनेभ्यस्तव
श्रीकामाक्षि मनोज्ञमन्दहसितज्योतिःकणेभ्यो नमः ॥१०० ॥

॥ इति मन्दस्मितशतकं समाप्तम् ॥

॥ समाप्ता चेयं शतकावलिः ॥

३० सर्व्वदर्शनसंग्रह ... १
३१ भामिनीविलास – सटीक ... १
३२ हितोपदेश – सटीक ... १
३३ भाषापरिच्छेद मुक्तावलीसहित ... १
३४ बहुविवाहवाद ... ।
३५ दशकुमारचरित—सटीक ... १॥
३६ परिभाषेन्दुशेखर ... ॥।
३७ कविकल्पद्रुम (वोपदेवकृत धातुपाठ) ... ।
३८ चक्रदत्त (वैद्यक) ... १।
३९ उणादिसूत्र – सटीक ... २
४० मेदिनी कोष ... १
४१ पञ्चतन्त्रम् [श्रीविष्णु-शर्म्म-सङ्कलितम्] ... २॥
४२ विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) ... ॥
४३ माधवचम्पू ... ।=
४४ तर्कसंग्रह (इंराजी अनुवाद सहित) ... ॥
४५ प्रसन्नराघवनाटक (श्रीजयदेवकविरचित) १
४६ विवेकचूड़ामणि [श्रीमत्शङ्कराचार्य्य विरचित] ।=
४७ काव्यसंग्रह [सम्पूर्ण] ... ५
४८ लिङ्गानुशासन (सटीक) ... ।
४९ ऋतुसंहार—सटीक ... ।=
५० विक्रमार्वशी—सटीक ... १।
५१ वसन्ततिलकभाण ... ।=
५२ गायत्री [वङ्गाक्षरैः] ...
५३ सांख्यदर्शन (भाष्यसहित) सांख्यप्रवचनभाष्य २
५४ भोजप्रबन्ध ... ॥।
५५ नलोदय—सटीक ... ॥=
५६ ईश केन कठ, प्रश्न, मुण्ड, माण्डूक्य, [सटीकसभाष्य] ५
५७ छान्दोग्य (उपनिषद्) [ सभाष्य-सटीक ] ५
५८ तैत्तिरीय ऐतरेय श्वेताश्वतर(उपनिषद्) सभाष्य
सटीक ... ... २

कलिकातासंस्कृतविद्यामन्दिरे—बि, ए उपाधिधारिणः

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्यस्य

सकाशात् लभ्यानि।